Sri Balamanorama Series No. 8.

# NALA CARITRA NĀṬAKA

OF

# NĪLAKAṆṬHA DĪKṢITA

# नलचरित्रनाटकम्

श्रीमन्नीलकण्ठदीक्षितविरचितम्

EDITED BY

C. SANKARARAMA SASTRI, M.A., B.L.,

*High Court Vakil, Mylapore, Madras.*

PRINTED AND PUBLISHED BY

BALAMANORAMA PRESS,

MYLAPORE, MADRAS.

1925 [Postage Extra

Sri Balamanorama Series No. 8.

# NALA CARITRA NĀṬAKA

OF

# NĪLAKAṆṬHA DĪKṢITA

# नलचरित्रनाटकम्

श्रीमन्नीलकण्ठदीक्षितविरचितम्

EDITED BY

C. SANKARARAMA SASTRI, M.A., B.L.,

*High Court Vakil, Mylapore, Madras.*



PRINTED AND PUBLISHED BY

THE SRI BALAMANORAMA PRESS,

MYLAPORE, MADRAS.

Price Re. 1]  1925  [Postage Extra

## EDITOR'S NOTE

I HAVE great pleasure in offering my sincere thanks to the following gentlemen who were pleased to lend me the use of their manuscripts of the Nala Caritra Nāṭaka in the preparation of this edition.

1. Professor S. Kuppuswamy Sastri, Curator, Government Oriental Manuscripts' Library, Madras.
2. M.R.Ry. A. Mahadeva Sastri, Director, Adyar Library.
3. M.R.Ry. Subrahmanya Sastri of Tanjore.
4. M.R.Ry. Kasi Viswanatha Sastri, Vyakarana Siromani, Madras.

It is a pity that the work was available only as far as the middle of the Sixth Act. I shall deem it a great favour if any gentleman in possession of the unpublished portion of this work condescends to send me his manuscript so as to enable me to supplement this edition by publishing the remaining portion as well.



C. SANKARARAMA SASTRI.

# NĪLAKAṆṬHA DĪKṢITA

IN A.D. 1553 Appayya Dīkṣita, the Great South Indian Reformer and Philosopher, the reputed author of more than hundred works traversing all branches of knowledge, was born in the village of Adayappalam near Arni in South Arcot District, Madras. Nīlakaṇṭha Dīkṣita, the Art-Critic of the Renaissance period of Classical Sanskrit was born about the year A.D. 1613 as the second son of Nārāyaṇa Dīkṣita, son of Āccān Dīkṣita, the younger brother of the Renowned Appayya Dīkṣita.

Of Nīlakaṇṭha Dīkṣita's birth and parentage, we have reliable information from his own works as well as from the Āccāndīkṣitendravamsāvali, composed by Vīrarāghava Kavi, a scion of Nīlakaṇṭha's family.

Regarding Nīlakaṇṭha's early life and activities, we have some scanty information supplied to us by Sivānandayogīndra in his epilogue to his edition of Nīlakaṇṭha's Sivotkarṣamañjarī printed in Benares.

He says:

श्रीभरद्वाजकुलजलधिविलसदप्पयदीक्षितविद्येश्वरवीक्षादीक्षाक्षपिता--
खिलमलः श्रीनीलकण्ठाभिधो वटुर्द्वादशवार्षिकः त्रयीं समग्रामधीत्य

गुरुमुखात् भसितरुद्राक्षमहालिङ्गादिमाहेश्वरसम्पदमुपलभ्य तस्मिन्नपि चिदम्बरसदसि महामहसि सर्वेषां पश्यतां विलीने सितभसिताङ्गरागः शिवनिवेशितचेताः शिवनियोगेन भूमिं समाधातुमोषधिप्रस्थात् प्रस्थितोऽगस्त्यमुनिरिव भूमिदेव्याम्बया दक्षिणाशामुखः प्रतस्थे ।

शिवदिदृक्षुरनेकदिनैश्शनैः कुटजशैलभवामगमन्नदीम् ।
सपदि भूपतिंकर्मक्कृदादृतो वटुरयं मधुरापुरमाप हि ॥
मलयसह्यगिरिप्रसरन्नदीद्वितयमौक्तिकहारविभूषिताम् ।
पुरमुवास स सुन्दरपाण्ड्यभूपतिमुखैरपरैरपि पालिताम् ॥

अथ खल्वेष श्रीतिरुमलनायकभूपालन्यायसभाधिपपण्डितकृतमण्डनः सर्वतन्त्रस्वतन्त्रो भूत्वा जायामुद्राह्य श्रीसुन्दरेशं साम्बं बहुमखैर्यष्ट्वा अकण्टकं भूपालं धराधिपत्येऽभिषिच्य कलिविडम्बनान्यापदेशवैराग्यशत-कार्याशतकशान्तिविलासनीलकण्ठविजयानन्दसागरस्तवादिसरसकविता-सुधासारैर्जगदानन्दयन्नाचोळकेरळं पाण्ड्यदेशाधिपसाचिव्यं सबहुमानं पञ्चत्रिंशद्वत्सरान् प्राचीनश्रीमणिवाचक इव बिभ्रत् जातुचिद्राजदम्पति-सभानिर्माणच्छलेन श्रीमुरारिशबरकुमारवदक्ष्येकं त्र्यक्षे समर्प्य भावि-बुद्धयुद्धसन्नाहमपि संसूच्य तेन राज्ञा सह प्रस्थाय विषयवैतृष्ण्यात्ताम्रा-नदीतीरे विजने वने भवने वा स्वात्मानन्दं चिरमनुबभूवेति किंवदन्त्यावगम्यते ।

शिवार्चनशिवध्यानशिवज्ञानरतस्सदा ।
आयुश्शेषं शिवं नीत्वा ययावन्ते महश्शिवम् ॥

It is clear—and this agrees with the extant tradition—that Nīlakaṇṭha must have been a young lad of twelve when his grandfather Appayya Dīkṣita showered his choicest blessings on him at Chidambaram just before his demise. The death of his grandfather must have forced Nīlakaṇṭha to look out for shaping his future in other and more advantageous places. And that is why, we find him bound southwards to Madura with his mother, even at that early age.

In due course, he gained great proficiency in all the Śāstras including statecraft. After serving the Madura Nāyaks for thirty-five years in various capacities as Regent, Advisor and Prime Minister, he seems to have grown disgusted, towards the end of that period, with his Sovereign's whimsicalities to such a degree that he decided to lay down his office in quest of retirement and peace. From his Sovereign, he obtained a free gift of the village of Pālāmaḍai on the left bank of the Tāmraparṇī River in the Tinnevelly District and spent the evening of his life in devout meditation which finally led him on to renounce the worldly life and become a real Sanyāsin. He must have lived to a ripe old age. His tomb may even now be seen within the precincts of the local temple.

As a Poet and Art-Critic, Nīlakaṇṭha Dīkṣita stands supreme among the galaxy of South Indian Sanskrit Writers of eminence. His works are many and varied in subject and diction. Throughout, he exhibits the masterhand which can wield the pen fluently, elegantly and at the same time with overflowing humour and pregnant suggestiveness.

Nīlakaṇṭha wrote his Nīlakaṇṭhavijayacampū in Kali 4738 or A.D. 1637. This is probably his earliest work. His major works are two Mahākāvyas, Sivalīlārṇava in 22 cantos and Gaṅgāvataraṇa in 8 cantos. Among his other works Sivotkarṣamañjarī, Kaliviḍambanam, Sabhārañjanasatakam, Sāntivilāsa, Vairāgyasatakam, Ānandasāgarastava and Anyāpadesasatakam have already been published.

His Nalacaritanāṭaka, a drama in six acts is now published for the first time. This charming little drama is so full of exquisite dramatic action and inspiring poetry that it needs no apology for its publication. In style, the work is so fluent and easy that it can well serve as an excellent introduction for beginners in the field of Sanskrit Drama. Nīlakaṇṭha Dīkṣita thus tersely puts his reason for the choice of the plot :

"कालं जेतुमुपायौ द्वौ कलिकल्मषसंप्लुतम् ।
कथा वा निषधेशस्य काशी वा विश्वपावनी ॥"

One easily hears the ring of Bhavabhūti in such a dogmatic assertion. It is a pity that all the available manuscripts abruptly stop about the middle of the sixth act. One rescension states that Nīlakaṇṭha Dīkṣita wrote only so far as the printed portion goes and adds that the author left it off at that stage with a definite aim in view, to wit, that it may be filled up by that writer who may complete the Mahāvīracarita of Bhavabhūti. With reference to this allusion to Bhavabhūti, it is worth while to mention that Bhavabhūti's Mahāvīracarita was first published in Bombay with the latter portions composed by the learned editor of the same and that, at a later date, the publishers republished the Mahavīracarita with Bhavabhūti's own text which came to light later on.

Another rescension of the Nalacarita MS. informs us that the scribe Vīrarāghava Kavi who lived in the latter half of the last century, completed the Nalacarita in excellent style, in full, in conformity with the original author's plan. But we have not so far been fortunate enough to get at this completed version. Time and further researches alone will have to decide whether the Drama was ever a completed whole.

We cannot better bring to a close our note on Nīlakaṇṭha Dīkṣita than by subscribing whole-

heartedly to the following just estimate of Nīlakaṇṭha's poetry expressed by Professor S. Kuppuswāmi Sāstri.

"उपमा कालिदासस्य भारवेरर्थगौरवम् ।
दण्डिनः पदलालित्यं माघे सन्ति त्रयो गुणाः ॥"

"भूम्ना भवन्ति यत्रैते गुणाः सर्वे तथापरे ।
नीलकण्ठस्य वक्रोक्तिः सा मुग्धेन्दुकलानिभा ॥"

P. P. S. SASTRI, B.A. (OXON),
M.A. (MADRAS), M.R.A.S.,
*Superintendent of Sanskrit Schools and Colleges, Madras.*

MANORAMĀ
*Kodaikanal*
15-5-1925.

---



Pages i—x printed at the Vasanta Press, Adyar.

॥ श्रीः ॥

# नलचरित्रं

नाम

नाटकम् ॥

अद्भुतं किमपि द्वन्द्वमस्तु तन्मम शर्मणे ।
स्वस्तिकस्तनुते यस्य [1]सुदृगाश्लेषनिर्वृतिम् ॥ १ ॥

अपि च ।

पत्युर्नेत्रे कराभ्यामपि च पिदधती लक्षिता फालदृष्ट्या
पश्चाल्लीनापि पीता सरभसमधरे पश्चिमेनाननेन ।
दीपे निर्वापितेऽपि प्रकटविहरणा चन्द्रिकाभिर्जटेन्दोः
ह्रीणा हृष्टा च भूयः प्रथमपरिचये पातु गौरी चिरं वः ॥ २ ॥

अपि च ।

कैकेय्यामनसूयतां प्रथमतः प्राप्तेऽपि राज्यच्यवे
कामास्ते फलिताः किलेत्यनुपदं निन्दां च लङ्कारणे ।
[2]पद्यैः संसदि गायतोस्तनययोः पार्श्वोपविष्टे कवौ
हर्षेर्ष्याशबला जयन्ति जगतां नेतुः[3] कटाक्षोर्मयः ॥ ३ ॥

( नान्द्यन्ते )

सूत्रधारः— ( पञ्चषपदानि गत्वा, पुष्पाञ्जलिं विकीर्य, नेपथ्याभिमुखमवलोक्य ) मारिष, इतस्तावत् ।

---

पाठान्तरम् । १. सुदृढाश्लेष. २. वाद्यैः. ३. पत्युः.

( प्रविश्य )

पारिपार्श्वकः— अयमस्मि ।

सूत्रधारः— सुविहितानि रङ्गमङ्गलानि ।

पारिपार्श्वकः— किमिदानीं प्रस्तुतम् ।

सूत्रधारः— ( विहस्य ) अपि नाश्रूयन्त भगवतः काञ्चीपुरनाथस्य कामाक्षीपरिणयोत्सवयात्रागतानामाज्ञाक्षराणि सामाजिकानाम् ।

पारिपार्श्वकः— [१]कथमिव ।

सूत्रधारः—

स्वादूनेव रसान् कटून् विदधतां कर्षन्तु मा मेति च
[२]क्रन्दन्त्येव पदानि वा कवयतां [३]कुर्वन्तु लज्जां [४]च वा ।
कुत्रैको मधुरो रसः क्व मधुरा वाणीति नो जीवतां
कर्णौ निष्करुणं दहन्ति कवयः कस्मादिदानीन्तनाः ॥ ४ ॥

तदर्हति भवानभिनवरूपकदर्शनव्यापन्नानामायुष्यमापादयितुम् । तथा च—

यत्र चित्राः कथोद्घाता यत्र च स्यन्दते रसः ।
व्युत्पन्नस्य कवेः [५]कर्म तत्किञ्चिदभिनीयताम् ॥ ५ ॥ इति ।

पारिपार्श्वकः— ( वि[६]हस्य ) साधु सामाजिकाः साधु, इदं खलु लवणोदादिक्षुरसानयनादेशनम् । कः पुनरस्मिन्[७]

---

पाठान्तरम् । १. किमिव. २. क्रन्दत्येव. ३. कर्षं च लज्जां च वा. ४. तु. ५. काव्यं. ६. ग-रमातृकयोर्नास्ति. ७. अस्मिन्नपि.

काले तादृशः प्रबन्धः ।

सूत्रधारः— सत्यम्, तथापि खल्वस्ति तादृशमेव नवनिर्वर्तितं नलचरित्रं नाम नाटकम् । कविरपि तस्य जगद्विदित एव ।

पारिपार्श्वकः— आः, स[1] रुक्मिणीपरिणयस्यापि प्रणेता ।

सूत्रधारः— (विहस्य) नहि नहि, अस्य खलु पितृव्योऽयं[2]मप्पयदीक्षितो नाम सरसकवितासाम्राज्यसार्वभौमस्तत्प्रणेता । अयं तु मुकुन्दविलासस्य काव्यस्य निबन्द्धा ।

पारिपार्श्वकः— आः, स्मृतम् । अस्य किल[3] कूटस्थाः साक्षात्कृतब्रह्माणः सर्वविद्यागुरवश्छन्दोगाः सोमपीथिनो द्वैतवादासहिष्णवो जगद्विदिता एव । अमीष्वपि विशेषात्तत्रभवानाप्पयदीक्षितः ।

सूत्रधारः— साधु स्मृतं साधु, तस्य किल कृष्णराजवन्दित-चरणारविन्दस्य भरद्वाजकुलचूडामणेरष्टभिः क्रतुभिरष्टभिरायतनैः शंभोरष्टभिर्ग्रामैरष्टभिस्तटाकैरष्टभिश्च सर्वविद्याविशारदैस्तनयैरष्टापि दिशो यशोभिर्ज्वलिताः[4] । तस्य पञ्चमः सूनुरद्वैतविद्यामुकुरविवरणदर्पणाद्यनेकप्रबन्धनिर्माता शीलित एव श्रीरङ्गराजाध्वरी ।

पारिपार्श्वकः— शीलित[5] एव । तस्य हि तपःपरिपाकफलमखिलराजकमौलिविश्रान्तशासनश्चतुरधिकशतप्रबन्धनिर्माणसाहसी

---

पाठान्तरम् । १. स हि. २. अयमित्यारभ्य निबन्द्धेत्यन्तं थ-रमातृकयोर्नास्ति. ३. कूलकूटस्थाः. ४. अभिज्वालताः. ५. परिशीलित.

श्रीकण्ठमतनिर्वाहधूर्वहः श्रीमानप्पयाध्वरी ।

सूत्रधारः— ज्ञायते स कल्पतरुं व्याचक्षाणः सरसकविना यद्-
स्तूयत बालकविना—

'अप्पदीक्षित किमित्यतिस्तुतिं
वर्णयामि भवतो वदान्यताम् ।
सोऽपि कल्पतरुरर्थलिप्सया
त्वद्गिरामवसरं प्रतीक्षते ॥ ६ ॥' इति ।

पारिपार्श्वकः— न केवलं तदेव । तदपि ज्ञायते यदेष शिवा-
र्कमणिदीपिकावसानलब्धकनकस्नानः प्रशंसितः साहित्यमा-
र्गसंप्रदायगुरुणा कविना समरपुङ्गवयज्वना—

'हैमाभिषेकसमये परितो निषण्ण-
सौवर्णसंहतिमिषाच्चिनबोम्मभूपः ।
अप्पय्यदीक्षितमणेरनवद्यविद्या-
कल्पद्रुमस्य कुरुते कनकालवालम् ॥ ७ ॥' इति

सूत्रधारः— तत्सोदर्यस्य विद्वत्कवेराच्चादीक्षितस्य महिमा केन
वर्ण्यते । तथापि किञ्चिद्वर्णितं गुरुरामकविना—

'शब्दब्रह्म जगाहुषी जगृहुषी वैशेषिकं साहुषी
तर्कोन्मर्दमुपेयुषी श्रुतिशिखां भाट्टे पदं दाशुषी ।
साङ्ख्यार्थानधिजग्मुषी विविदुषी साहित्यमर्माखिलं
कस्मिन्नस्य हि शेमुषी नृपसभे नापूपुषद्वैदुषीम् ॥ ८ ॥'

---

पाठान्तरम् । १. नाम. २. साङ्ख्यादी.

इति । तस्य पौत्रः साहित्यरत्नाकरमहावीरचरितादिप्रबन्धव्याख्यातुः कविलोकचूडामणेरम्बिकापुरुषावतारस्य तत्रभवतो नारायणाध्वरिणो द्वितीयनन्दनो भूमिदेवीगर्भसंभवः कविर्नीलकण्ठः प्रणेतास्य प्रबन्धस्य ।

पारिपार्श्वकः— ( साश्चर्यम् ) इयदनेन शास्त्रसाहित्ययोः कौशलमासादितं किमनुग्रहेण ।

सूत्रधारः— कस्य वा पुनरन्यस्यानुग्रहेण भविष्यति । तत्रभवत्याः परदेवतायास्तदवतारस्य च भगवतो नारायणाध्वरिणः प्रसादेन । उक्तं च तेनैव कविना—

चन्द्रशेखरसव्याङ्गचरणोन्मार्जनाम्भसाम् ।
विवर्ता जगदुत्सङ्गे विहरन्ति मदुक्तयः ॥ ९ ॥
नारायणाध्वरीन्द्राय नमोऽस्तु ज्ञानसिन्धवे ।
शारदा यत्कटाक्षाणां साप्यवेतनकिंकरा ॥ १० ॥ इति च ।

पारिपार्श्वकः— कथमिदमतिगम्भीरहृदयं रूपकमार्येण तत्त्वतः परिज्ञातम् ।

सूत्रधारः— ( विहस्य ) अस्त्युपायः ।

पारिपार्श्वकः— क इव ।

सूत्रधारः— अग्रजन्मा खलु तस्य रसिकलोकमौलिमणिराचादीक्षितो व्याकरोदिदं रूपकमनुजस्नेहात् ।

---

पाठान्तरम् । १. भवान्याः. २. कविलोक.

पारिपार्श्वकः— कथमयं कविरन्तर्मुखस्त्वत्यन्तविचारप्रवृत्तोऽपि करोति स्म नाटकेऽप्यभिरुचिम् ।

सूत्रधारः— यतोऽयमीदृशस्तत एवोक्तमत्रापि विषये तेनैव ।

कालं जेतुमुपायौ द्वौ कलिकल्मषसंप्लुतम् ।
कथा वा निषधेशस्य काशी वा विश्वपावनी ॥ ११ ॥ इति ।

( पुनः सहर्षम् ) सर्वं सुघटितम्, तथा हि कविर्विदितः, काव्यं च । अन्यदेव कौशलमस्माकं भरततन्त्रेषु, परिषदपि रसोन्मुखी ।

पारिपार्श्वकः— सत्यमेतत् । कथमद्य पुरोभागी खललोकः सहतामस्माकमियन्तमुत्कर्षम् ।

सूत्रधारः— सहतां मा वा । किमेभिः ।

प्रायो व्याहन्यमानापि प्रत्यूहैरन्तरान्तरा ।
लब्धैव कीर्तिरस्माकं नलस्येव विदर्भजा ॥ १२ ॥

पारिपार्श्वकः— ( सानुस्मरणम् ) किमुपक्रममभिनेतव्या कथा- स्माभिर्नैषधस्य ।

सूत्रधारः— यदा खलु समानकुलरूपसौशील्यशालिनीं प्रापयितुं दमयन्तीमस्थां च पुनरैन्दववंशमूर्धन्यमासादयितुं कुमार- मिन्द्रसेनमाज्ञापितया पितामहेन भगवत्यैव सरस्वत्या सह- जगाम्भीर्यसंस्तम्भमन्थरमवगाहयितुं हृदयमनङ्गवीरशरगो-

---

पाठान्तरम् । १-खललोकः २-लब्धैव

चरे सन्दर्शिता स्वप्ने सैव निषधेश्वरस्य राजर्षेः ( इत्यर्धोक्ते पुरोऽवलोक्य ) अद्वितीयः किल रूपकाभिनयेष्वनुजो मे रङ्गशेखरः । यदेष यथाचिन्तितमेव स्वप्नदर्शनात्प्रभृत्युन्मनायमानस्य तद्विनोदनायैव विसृष्टनिखिलराजकस्य विदूषकमात्रोपसेवितस्य नैषधस्यैव भूमिकामादाय प्रविशति रङ्गमण्डपम् । तदेह्यावामप्यनन्तरपात्रनिर्वर्तनाय गच्छावः ।

( इति निष्क्रान्तौ )

॥ प्रस्तावना ॥

( ततः प्रविशति कामयमानावस्थो राजा विदूषकश्च )

राजा— ( मदनाकूतमभिनीय )

अस्थाने विनिपात्य शान्तविषयव्याक्षेपसुस्थं मनो
दूरे विम्बमिव प्रदर्श्य मुकुरे दुष्प्रापमर्थं पुनः ।
स्वामिन्मन्मथ यत्त्वया [1]खलु जनो मुग्धोऽयमायास्यते
[2]किं ते शौर्यमिदं किमङ्ग हसितं किं नाम वा कौशलम् ॥

विदूषकः — जेदु महाराओ । जयतु महाराजः ।

राजा — ( अश्रुतिमभिनीय पुनस्तमेव पठति )

विदूषकः— ( आत्मगतं ) वाळिअं खु रूढो से हिअआवक्खेवो । ( प्रकाशम् ) णं भणामि जेदु महाराओ त्ति ।

वलवान् खलु रूढोऽस्य हृदयावक्षेपः । ननु भणामि

पाठान्तरम् । १. किल. खिल. २. तत्किं.

जयतु महाराज इति ।

राजा— ( विलोक्य ) आसीदतु प्रियवयस्यः ।

विदूषकः— ( सोल्लासम् ) किं णु खु अभुत्तवन्तो विअ किळंतो दीसइ ।

किं नु खलु अभुक्तवानिव क्लाम्यन् दृश्यसे ।

राजा— ( आत्मगतम् ) जठरपरिग्लानि[1]भरणमात्रेण [2]जातचिन्तासन्तोषवृत्तयः प्रार्थितदुर्लभाः खलु प्रकृतयो ब्राह्मणानाम् ।

( प्रकाशम् ) आतपे मृगयाविनोदात् ।

विदूषकः— किं णु खु आदवसन्दावस्स मअणोवाळंभणं पडिआरो ।

किं नु खलु आतपसन्तापस्य मदनोपालम्भनं प्रतीकारः ।

राजा— ( आत्मगतम् ) आः कथमश्रूयतैव वटुना विस्रब्धस्य मे विभ्रान्तजल्पितं, कथं वा पुनरसंभावितोदर्कं मे प्रस्तुतमस्मै निवेद्यताम् । ( विहस्य )

वन्ध्योदर्क इति ह्रियैव सुदृढं रूढां रुजं मानसीं
वक्तुं न प्रभवामि यत्र हृदयादप्यन्तरङ्गे जने ।
मत्याशा तु [3]तथाविधेऽपि विषये मग्नैव नोन्मज्जति
प्रायो युक्तमलङ्घ्यशासन इति त्रैलोक्यवीरे स्मरे ॥ १४ ॥

( प्रकाशम् सर्वतोऽवलोक्य, दीर्घमुष्णं च निःश्वस्य )

आः, श्रूयतां तावत् ।

---

पाठान्तरम् । १. हरण. २. जातचिन्ता: ३. तथाविधे तु

प्रायशो रूढमूलानां चिन्तानामुभयी गतिः ।
सिद्धिरर्थस्य मित्रेषु संक्रमः केवलोऽथवा ॥ १५ ॥

सखे चारायण, किमपरं कार्यज्ञोऽसि गुप्तमन्त्रश्च । अतो निःशङ्कमावेद्यते हृदयावस्कन्दः ।

हर्तुं विवेकमवधीरयितुं च धैर्यं
अन्धे तमस्यपि निमज्जयितुं मनो मे ।
मायैव काचन वधूरिति दर्शिताभूत्
स्वप्ने निवृत्तकरुणं मकरध्वजेन ॥ १६ ॥

तां च मदनरहस्तन्त्राधिदेवतां प्रणयस्नेहलज्जापरिप्लुतं पश्यन्तीमिव मां यावदनुभवामि, तावदस्मदीययोर्वन्दिहतकयोः प्रभातभोगावलीपठनकोलाहलेन प्रतिबोधितोऽस्मि मन्दभाग्यः ।

**विदूषकः**— ( स्वगतम् ) पैच्छूसदिट्ठो से सिविणओ फलिस्सदि णूणम् । अहवा कोवइस्सं दाव । ( प्रकाशम् ) भो वअस्स मए जाणीदम् ।

प्रत्यूषदृष्टोऽस्य स्वप्नः फलिष्यति नूनम् । अथवा कोपयिष्यामि तावत् । भो वयस्य मया ज्ञातम् ।

**राजा**— किमिव ।

**विदूषकः**— पच्छूसोत्ति पुडमं पडिबुद्धा अन्तेउरं गच्छन्ती देवी एव्व णिद्दाकलुसळोअणेण तुए दिट्ठा सा एव्व दे मअण-

---

पाठान्तरम् । १. प्रबुद्धोऽस्मि. २. पच्चूसदिट्ठो सिविणओ

माया संवृत्ता ।

प्रत्यूष इति प्रथमं प्रतिबुद्धा अन्तःपुरं गच्छन्ती देव्येव निद्राकलुषलोचनेन त्वया दृष्टा सैव ते मदनमाया संवृत्ता।

राजा-- बालिश, श्रोतव्यं[1] शेषं न शृणोषि ।

विदूषकः-- कहेहि कहेहि अवहिदो ह्मि ।

कथय कथय अवहितोऽस्मि ।

राजा-- ततः प्रतिबुद्धोऽपि प्रत्यक्षामिव तामनुभवन् परवानस्मि मदनेन । ततश्च ।

हर्षाद्भुतस्तिमितमन्थरितैरपाङ्गैः
अङ्गैश्च सान्द्रपुलकैरभिलक्षितं नः ।
आतङ्कमङ्गजनिरूढमपाङ्ग्यन्त्या
देव्या गतं प्रकृतिकोपनयावरोधे ॥ १७ ॥

अपि च न कथञ्चिदन्यस्यामसौ प्रतीतिरवतरति । यतः

तद्भ्रूयुगं तरलितं कुचयोर्युगं तत्
तद्वक्त्रमिन्दुमधुरं तदपाङ्गितं च ।
तद्वा वपुर्मृगदृशो न मया न चान्यैः
आलोकितं क्वचिदथाकलितं श्रुतं वा ॥ १८ ॥

विदूषकः— जइ एव्वं, सफळो दे सिविणओ होदु ।

यद्येवं, सफलस्ते स्वप्नो भवतु ।

---

पाठान्तरम् । १. श्रोतव्यशेषं.

राजा— कुतो मे स्वप्नस्य सफलता । पश्य

क्षणं तावत्स्वप्ने तटिदिव मृगाक्षी परिचिता
विलिल्ये सा भूयो गगन इव गन्धर्वनगरी ।
कुलं वा शीलं वा वसतिरपि वाऽस्या न विदितं
कुतो नः प्रत्याशा कुवलयदृशा[1] सङ्गम इति ॥ १९ ॥

परस्तात्तु[2] वनवृत्तान्तः परिज्ञात एव भवतोऽपि ।

विदूषकः— जाणामि किं वि, सव्वं तु ण जाणामि । जह तुए बह्मलोअसमाअदे हेमे हंसे गहिअमत्ते एव्व बह्मणत्तणसुलहेण सद्धसेण पळाइदोह्मि उवरि कहेहि ।

जानामि किमपि, सर्वं तु न जानामि यथा त्वया ब्रह्मलोकसमागते हैमे हंसे गृहीतमात्र एव ब्राह्मण्यसुलभेन साध्वसेन पलायितोऽस्मि । उपरि कथय ।

राजा— तस्य च गृहीतमात्रस्यैव तरळपरिभ्रान्त[3]लोचनेन तादृशदशाविशेषेण विद्रुतहृदयो विशिथिलमिव करोमि यावन्मुष्टिबन्धं स च तावदुड्डीय साधयन्निदमाचचक्षे ।

विदूषकः— जं ण तवेण वि सुलहं जं च तुए सिविणए दिट्ठम् ।
अंकोहरणं[4] रअणं तं ते उपकत्तुणो मए होदु ॥ २० ॥

यन्न तपसापि सुलभं यच्च त्वया स्वप्ने दृष्टं ।
अङ्काभरणं रत्नं तत्ते उपकर्तुर्मया भवतु ॥

राजा— इयदभिधाय गतो न पुनरागतः ।

---

पाठान्तरम् । १. दृशः. २. पुरस्ताद्वृत्तान्तस्तु. ३. भ्रान्त. ४. अंगाहरणं

विदूषकः— कहं एत्तिअं वि संघडिदे कज्जे तुह ईरिसी चिंता ।

कथमेतावदपि सङ्घटिते कार्ये तवेदृशी चिन्ता ।

राजा— ( विहस्य ) इयत्तावदद्य सङ्घटितम् । पश्य—

सा लभ्या मम नाम या न विदिता कस्येति वा केति वा
दूतोऽस्यास्स च नाम यः परिचितो जात्यैव नास्मिन्क्रमे ।
किं माया मदनस्य किं त्वयमपि स्वप्नः किमाहो भ्रमः
किं वा चापलमेव मे हतविधिर्व्यङ्क्तुं परिक्रीडते ॥ २१ ॥

विदूषकः— भो वअस्स, पौराणिअगोट्ठीसु एसो महंतो वादो, जं सिविणअदिट्ठो एव्व अणिरुद्धो उसाए लद्धोत्ति । तुह वि तह एव्व भविस्सदि ।

भो वयस्य, पौराणिकगोष्ठीषु एष महान् वादः, यत्स्वप्नदृष्ट एवानिरुद्धः उषया लब्ध इति । तवापि तथैव भविष्यति ।

राजा— तत्तु चित्रलेखाप्रभावात् ।

विदूषकः— तुह वि मह प्पहावादो । ण खु मन्तव्वं सरीरणिंमाणसरिसो खु से बुद्धिविसेसोत्ति । अंडकोसे खु गंधमज्जारस्स अत्थि सअळलोअमाणणिज्जो परिमळो ।

तवापि मम प्रभावात् । न खलु मन्तव्यं शरीरनिर्माणसदृशः खल्वस्य बुद्धिविशेष इति । अण्डकोशे खलु गन्धमार्जारस्य अस्ति सकललोकमाननीयः परिमळः ।

राजा— ( निस्सहम् विहस्य ) भवतु यथा तथा वा, भण यथाप्र-

---

पाठान्तरम् । १. व्यक्तं. २. इदं पदं त-गकोशयोर्नास्ति.

तीतम् । कालस्तावदेकः क्षिप्रो भवति । अपि च ।

अप्राप्य वहिरुपायानन्तस्सम्भ्रान्तपिण्डितं चेतः ।
पय इव निविडोत्पीडं प्रार्थयते कियदपि द्वारम् ॥ २२ ॥

विदूषकः— जारिसी तुए सिविणए दिट्ठा तारिसी एव्व चित्ते ळिहीअदु ।

यादृशी त्वया स्वप्ने दृष्टा, तादृश्येव चित्रे लिख्यताम् ।

राजा— अयमपरोऽनर्थः । अयमसौ कण्टकमुद्धृत्य शल्यप्रक्षेपः । अपि च भूयानायासः स्फुटं च न किञ्चित्फलमित्युपरम्यताम् ।

विदूषकः— सफळं एव्व । सफलमेव ।

राजा— कथमिव ।

विदूषकः— तदो तं आकिदिविसेसं दट्ठूण सामुद्दिअलक्खणविअक्खणो देव्वण्णो अह्मकेरो सच्चाअरिओ वदिस्सदि, एसा ईरिसस्स कण्णआ ईरिसदेसिआ, ईरिसस्स वहू भविस्सादित्ति ।

ततः तमाकृतिविशेषं दृष्ट्वा सामुद्रिकालक्षणविचक्षणो दैवज्ञोऽस्मदीयः सत्याचार्यो वदिष्यति, एषा ईदृशस्य कन्यका, ईदृशदेशीया, ईदृशस्य वधूर्भविष्यतीति ।

राजा— ( आत्मगतम् ) कथं भविष्यतीत्यपरिगृहीतामेव तां निर्दिशति प्रियवयस्यः । ( स्मरणमभिनीय ) सत्यमपरिगृहीतैव

---

पाठान्तरम् । १. क्षिप्तो.

तत्रभवती । तथा हि ।

आबद्धहारलतिकापुनरुक्तरेखं
आभुग्नमीषदिव मामवलोकयन्त्याः ।
अन्तर्दृशा ननु समैक्षिषि कण्ठनाळं
अस्वीकृतप्रथमभूषणमानताङ्ग्याः ॥ २३ ॥

( प्रकाशम् ) साधु भोस्साधु, चतुरमुत्प्रेक्षसे, गच्छ सम्पादय चित्रसम्भारान् ।

विदूषकः— जं आणवेदि वअस्सो । ( इति निष्क्रान्तः )
यदाज्ञापयति वयस्यः ।

राजा—

प्रत्यग्रोपनतैर्बहिर्नियमिता तैस्तैः प्रजावेक्षण-
व्याक्षेपैः प्रणयातिवर्तनभिया रुद्धावरोधेष्वपि ।
स्तोकेनोच्चलिता जने सहृदये स्रोतश्शतेनाधुना
चिन्ता संप्लवते चिराय विजने लब्धावकाशेव नः ॥ २४ ॥

( प्रविश्य )

कञ्चुकी— ( किञ्चिदिवापसृत्य ) कथं महाराजो विविक्तमध्यास्ते ।
( सखेदम् ) अपि च ।

पर्णेऽपि त्रुटिते विवृत्तवदनस्साशङ्कमाशङ्कते[1]
दत्ते च क्वचिदेव वीतविषयव्यापारदीर्घां दृशम् ।

---

पाठान्तरम् । १ सातङ्कमाशङ्कते.

किञ्चिन्मन्त्रयते निजेन हृदयेनैव श्वसित्यायतं
कष्टं धिक् प्रतिरोहतीव करुणो देवस्य चिन्ताज्वरः ॥

कः पुनरस्य चिन्ताहेतुस्स्यात् । (विमृश्य) हन्त नूनं तयैव हंससंवादकिंवदन्त्या भवितव्यम् । तदेवमसमये कथं निवेद्यताम् । (विचिन्त्य) अथवा किमेतेन समयेषु वाऽसमयेषु वा वक्तव्यमेव दृष्टमित्यस्माकमादेशः । (उपसृत्य वेत्रदण्डमाघट्टयन्) महाराजपादसन्दर्शनाय पौरजानपदाः प्रतिहारभूमिमाधिवसन्ति ।

राजा— परिश्रान्तोऽयं जन इति प्रेष्यतां समाजः । सत्याचार्यः पुनरेकः स्थाप्यताम् ।

कञ्चुकी— यदाज्ञापयति देवः । (इति निष्क्रान्तः)

राजा— सत्यमधुनाऽन्य एव नलोऽस्मि संवृत्तः । प्राक्तनस्तु स्वप्रदृष्ट एव जने सर्वभावेन प्रलीनः । तथा हि ।

विश्रान्तिः किल यत्र तत्र मनसः क्षोभोऽधुनान्तःपुरे
यत्राक्ष्णोः परमा रतिः परिजने तत्रैव रूक्षा स्थितिः ।
यान्यस्त्रैणकथा श्रुतापि न पुरा सा वर्तते मन्त्रवत्
संभाव्येत किमेषु किञ्चिदपि मे स्याच्चेन्नलः प्राक्तनः ॥२६॥

(पुरोऽवलोक्य) कथमयं जाल्मः कलावत्यैव चित्रसंभारमानाययति । उच्छ्वसितामियं हि देव्याः तत्पादमूल एव यामिकस्य प्रत्यवरोपितं मुषितम् । (विचिन्त्य) किमत्र प्रति—

पाठान्तरम् । १. किञ्चामन्त्रयते. २. सूनृतयैव. ३. विलीनः.

कर्तव्यम्, भवत्वेवं तावत्।

( प्रविश्य कलावतीद्वितीयो विदूषकः )

विदूषकः— एसो चित्तसम्भारो। एष चित्रसंभारः।

राजा— बालिश रे समानय चित्रवस्तूनीति विचित्रवस्तुदिदृक्षयाऽऽदिष्टस्समानीतवानसि किमालेख्यसामग्रीम्।

विदूषकः— णं मए तुह एव्व अभिप्पायाणुरोहेण। ( इत्यर्धोक्ते राज्ञा संज्ञाप्यमानः स्तब्ध इव स्थित्वा ) ता णाणीदं मन्दबुद्धिणा।

ननु मया तवैवाभिप्रायानुरोधेन। तन्नानीतं मन्दबुद्धिना।

राजा— ( स्वगतम् ) सर्वथा हतास्स्मो वयममुना यथाश्रुतग्राहिणा पशुना।

कलावती— ताणाणीदीति चाराअणवअणादो एव्व पअप्पिदं देव्वस्स विचित्तवस्तुदंसणकोदूहळं। होदु देवीए णिवेदइस्सम्।

( इति चित्रसंभारान्निक्षिप्य कुपिता निष्क्रान्ता )

तन्नानीतमिति चारायणवचनादेव प्रजल्पितं देवस्य विचित्रवस्तुदर्शनकौतूहलम्। भवतु देव्यै निवेदयिष्यामि।

विदूषकः— गच्छदु दुट्ठदासी, लद्धो चित्तसम्भारो। ( इत्युपविशति )

गच्छतु दुष्टदासी, लब्धश्चित्रसम्भारः।

राजा— कथमापतित एव दुष्परिहारोऽनर्थः।

विदूषकः— एक्कदण्डप्पणाममेत्तेण एक्कवारचळणताडणेण पि वा पडिकराणिज्जे साअं साहणिज्जे वि देवीए कोवे कीरिसं तुमं

चिन्तेसि ।

एकदण्डप्रणाममात्रेण एकवारचरणताडनेनापि वा परिहरणीये साथं साधनीयेऽपि देव्याः कोपे कीदृशं त्वं चिन्तयसि ।

राजा— सत्यमाह सायाह्न इति वयस्यः । अद्य खलु प्राणता रजनी चिन्तयितव्या । तदर्पय चित्रपटम् ।

विदूषकः— इदं फळअं, एसो चित्तपडो, इअं च तूळिआ, इमे अ वण्णसंभारा । ( इत्यर्पयति )

इदं फलकं, एष चित्रपटः, इयं च तूलिका, इमे च वर्णसंभाराः ।

राजा— ( गृहीत्वा, क्षणमनुध्याननाटितकेन पुनर्निधाय )

स्मृतिपथमुपारूढा सुभ्रूर्यदि प्रणिधानतः
कियदपि किल स्तम्भादङ्गानि न प्रसरन्ति नः।
अथ न विरतो वादः का लिख्यतामिति संप्रति
प्रकृतमभवत्कर्म द्वेधाप्यसंभववाधितम् ॥ २७ ॥

विदूषकः— सहजं एव्व धेरं गेह्णिअ लिहदु वअस्सो ।

सहजमेव धैर्यं गृहीत्वा लिखतु वयस्यः ।

राजा—

या मन्मथेन लिखिता मम चित्तभित्तौ
या लिख्यते तदनु दिक्फलके च दृष्ट्या ।

---

पाठान्तरम् । १. दर्शय. २. चित्रपुटं.

तामालिखेयमिह चित्रपटेऽपि तन्वीं
सिद्धिस्तु मारहतकस्य करे निविष्टा ॥ २८ ॥
( कथञ्चिदालिख्य ) पश्यतु प्रियवयस्यः ।

विदूषकः— सा एव्व एसा । सैवैषा ।

राजा— अथ किम् ।

विदूषकः— भअवदि णमो दे, जा तुमं ईरिसी अण्णारिसेव अस्स संदावे काळणं । ( राजानं प्रति ) जहदिट्ठं ळिहिदा ।

भगवति नमस्ते, या त्वमीदृशी अन्यादृशीवास्य सन्तापे कारणम् । यथादृष्टं लिखिता ।

राजा— लिखितैव । ( चित्रनायिकां प्रति सबाष्पम् )

पश्येयं भवतीं दृशा न[1] तु तया ग्लायन्ति गात्राणि ते
त्वामालिङ्गितुमर्थये[2] न[3] हि महानङ्गेष्वनङ्गज्वरः ।
त्वामन्तःकरणे वहे न हि न हि क्वेदं ममेदृङ्[4]मनः
पुष्पादप्यतिकोमला क्व भवती मन्तुर्नवः क्षम्यताम् ॥ २९ ॥

विदूषकः— किं दे पलावेण । सण्णिहिदा सिद्धी, सच्चाअरिओ समाणीअदु ।

किं ते प्रलापेन । सन्निहिता सिद्धिः, सत्याचार्यः समानीयताम् ।

राजा— ( कथञ्चिदात्मानं निगृह्य चक्षुषी विमृज्य ) कः कोऽत्र भोः ।

( प्रविश्य )

---

पाठान्तरम् । १. ननु. २. उत्सहे. ३. ननु. ४. ममेदं.

कञ्चुकी— अयमस्मि ।

राजा— सत्याचार्यः प्रवेश्यताम् ।

कञ्चुकी— यदाज्ञापयति देवः । ( इति निष्क्रम्य सत्याचार्येण सह प्रविश्य ) एष महाराजः । उपसर्पतु भवान् ।

सत्याचार्यः— कष्टमपवादभूयिष्ठं अल्पप्रयोजनं च दैवज्ञजीवितम् । अपि च दुष्परिहरमेव पौरोभाग्यमभिज्ञमानिनाम् ।

प्रकृतिस्सा किल नाम प्रमादजो यः फले विसंवादः ।
शतशोऽपि दृश्यमानस्संवादः काकतालीयः ॥ ३० ॥

न च विचारोऽयमस्मत्स्वामिनि यस्य विरुदामिदमुद्धुष्यते ।

परिज्ञातुं तत्त्वं निखिलमपि विद्यासु विदुषां
परिज्ञातं भूयः परिषदि सतां श्लाघितुमपि ।
फलैर्योक्तुं तत्तत्क्रमसमुचितैः श्लाघितमपि
प्रगल्भः कोऽन्यस्स्यात्त्रिभुवनवदान्यो यदि नलः ॥ ३१ ॥

( उपसृत्य ) स्वस्ति महाराजनैषधाय ।

राजा— एष वः प्रणामः । परिगृह्यतामासनम् ।

सत्याचार्यः— ( उपविशति )

राजा— कञ्चुकिन्, अस्मदादेशमन्तरेण पार्श्वचरोऽपि जनः क्षणं न प्रवेश्यताम् ।

कञ्चुकी— यदाज्ञापयति देवः । ( इति निष्क्रान्तः )

सत्याचार्यः—( सप्रश्रयम् ) कीदृशो महाराजस्य नियोगः ।

विदूषकः— ( साक्षेपम् ) णं देवण्णो तुमं, ता किं ति करअळे दप्पणं गण्हिअ कीरिसं मे मुहं ति पुच्छसि। कहेहि देवस्स चिंतिदम्।

ननु दैवज्ञस्त्वं, तत्किमिति करतले दर्पणं गृहीत्वा कीदृशं मे मुखमिति पृच्छसि। कथय देवस्य चिन्तितम्।

सत्याचार्यः— ( विदूषकवाक्याक्षराणि गणयन् ) प्रायेण स्त्रियं वा श्रियं वाधिकृत्य प्रवृत्तेयं चिन्ता।

विदूषकः— ण केवलं गाणिदे एव्व सइवत्तणे वि पण्डिदोऽसि। जं राआणो पाएण अत्थकामपरा होंतित्ति तदणुरूवं भणिदम्।

न केवलं गणित एव साचिव्येऽपि पण्डितोऽसि, यद्राजानः प्रायेण अर्थकामपरा भवन्तीति तदनुरूपं भणितम्।

सत्याचार्यः— ( सकोपम् ) चारायण सर्वपथीनस्ते परिहासः। शृणु तावत्। ( क्षणमनुध्याय ) स्त्रियमधिकृत्यैव चिन्ता।

राजा— परीक्ष्यते किमिदानीं नवीन इव प्रज्ञोन्मेषो भवताम्। ( इति चित्रपटं दर्शयन् ) एषा किंजातीयस्य कन्यका किंजातीयस्य परिग्रह इति सामुद्रिकालक्षणेन परीक्षन्तां भवन्तः।

सत्याचार्यः— ( विलोक्य ) मानुषीच्वेषा।

विदूषकः— किं रक्खसित्ति सन्देहो।

किं राक्षसीति सन्देहः।

राजा— ( स्वगतम् ) कथमीदृशस्य रूपस्य मानुषीषु संभवः।

(प्रकाशम्) ततस्ततः ।

सत्याचार्यः— (सहर्षम्)

उन्नतं त्रिषु नासायामुभयोः कुचयोरपि ।
दीर्घं द्वयोर्दृशोरस्या रूपं त्रैलोक्यदुर्लभम् ॥ ३२ ॥

विदूषकः— हीही णिगहीदोसि । मम वि वह्मणीए ईरिसं रूपम् ।
ही ही निगृहीतोऽसि । ममापि ब्राह्मण्याः ईदृशं रूपम् ।

सत्याचार्यः— (साश्चर्यम्) कथम् ।

विदूषकः— सा वि दुवेसु दीहा थणेसु, तिसु उण्णदा दंदे णिडाले जडरे अ ।
सापि द्वयोर्दीर्घा स्तनयोः, त्रिषून्नता दन्ते निटिले जठरे च ।

राजा— (विहस्य) किमनेनासम्बद्धप्रलापिना[1] । दृश्यतां द्रष्टव्यम् ।

सत्याचार्यः— नूनमन्यूना भाग्यरेखा पितृमुखच्छायामप्याक्षिपेदस्याः । ततश्च ईदृशमुखारविन्देन गुरुणापि महाराजेन भवितव्यम् ।

राजा— (स्वगतम्) किमेतावता सीदतो हृदयस्य । इदं तु खलु प्रागेव निश्चितम् ।

अवाप्तुमीदृशीं कन्यामस्ति यस्य विधेर्लिपिः ।
स महानिति राजेति संशयः कोऽत्र वर्तते ॥ ३३ ॥

(प्रकाशम्) कस्मिन्नु जनुर्जनपदे ।

---

पाठान्तरम् । १. प्रलापेन.

सत्याचार्यः— ( क्षणं स्थित्वा ) वकारादौ जनपदे विदर्भेषु वा विराटेषु वा ।

राजा— किं परिग्रहयोगोऽस्त्यस्याः ।

सत्याचार्यः— बाढम् । अपि च ।

अस्निग्धं पुनरंसलं च कृशमप्यङ्गं प्रकृत्या यतो
यच्चास्याः कुटिलापि गुल्फवलयव्यालम्बिनी वेणिका ।
वैशाल्येऽपि यदायते च नयने तत्किं प्रपञ्चैर्गिरां
सप्तद्वीपपतेस्तु कस्यचिदियं राज्ञोऽवरोधोचिता ॥ ३४ ॥

राजा— अयि सर्वथा कस्यचिदिति महति संशये पातितास्स्मः ।

विदूषकः— को अत्थ संदेहो सत्तदीपपइणो परिग्गहोत्ति असाहारणेण लच्छणेण सामण्णमुहेण वि तुमं एव्व णिद्दिट्ठो । कोऽत्र सन्देहः सप्तद्वीपपतेः परिग्रह इति असाधारणेन लक्षणेन सामान्यमुखेनापि त्वमेव निर्दिष्टः ।

राजा— ( स्वगतम् ) इदं खलु त्रिलोकीगृहमेधिनि मघवत्यपि युज्यते । ( विचिन्त्य ) भवतु पृच्छामि तावत् । ( प्रकाशम् ) भगवन्, अपि ज्ञातुं शक्यं नरस्य वा सुरस्य वा परिग्रह एषेति ।

सत्याचार्यः— अद्य वदामि । ( विमृश्य ) अस्तीव देवपरिग्रहप्रसङ्गः ।

राजा— ( आत्मगतम् ) आः कीदृशो दैवपरिणामः, विच्छिन्नः प्रत्याशातन्तुः, विफलश्च नलनिर्माणपरिश्रमो विधातुः ।

विदूषकः— धीरो होहि । अत्थीवात्ति खु भणिदं । पुच्छिस्सं दाव सेसं वि ।

धीरो भव । अस्तीवेति खलु भणितम् । प्रक्ष्यामि तावत् शेषमपि ।

राजा— ( प्रकाशम् ) सम्यङ्निरूप्यताम् ।

सत्याचार्यः— ( सम्यङ्निरूप्य )

प्रार्थ्यते केवलं देवैः प्राप्यते न कथञ्चन ।

राजा— ( आत्मगतम् ) हृदय समाश्वसिहि समाश्वसिहि ।

सत्याचार्यः—

स एव पतिरस्याः

राजा— ( आत्मगतम् ) कः खल्वेषः ।

सत्याचार्यः—

यस्सप्तद्वीपाधिपो नृपः ॥ ३५ ॥

किन्तु परिग्रहे पुनरस्याः प्रत्यूहा बलवन्तः पुरस्तादपि परस्तादपि ।

राजा— ( स्वगतम् ) प्रत्यूहा इति अनुग्रहाक्षराण्यमूनि । प्रसक्ति-महोत्सवः किलानेन संपाद्यते ।

सत्याचार्यः— कालविप्रकर्षसंवादादिभिः किमन्यैः । इदं तावदभि-लक्षये । यत्किल तिरश्चापि व्यक्तवाचा दूतेन श्रोष्यते

---

पाठान्तरम् । १. अण्डजेन.

नूनमधुनैव तस्या वृत्तान्तः ।

विदूषकः— ( राजानं विलोक्य ) देवो एव्व एसो । देव एवैषः ।

( इत्युत्थाय प्रणन्तुमिच्छन् राज्ञा भ्रूभङ्गेन संज्ञया वारितस्तिष्ठति । )

राजा— ( हृदयं प्रति ) समाश्वसिहि क्षणं समागममनोरथसंभावनया । ( सत्याचार्यं प्रति ) मनस्येव विश्राम्यत्वयमर्थो भवताम् ।

सत्याचार्यः— ( विहस्य ) बाल्यतः प्रभृत्येव कृतमहाराजसेवनः किमेतावदपि न जाने ।

राजोदन्तश्च मन्त्रश्च धर्मश्च विधिचोदितः ।
संवृतस्संवृतः श्रेयान्विवृतो विवृतो हतः ॥ ३६ ॥

राजा— परिश्रान्त इवास्मि ।

सत्याचार्यः— स्वस्ति विश्राम्यतु देवः । ( इति निष्क्रान्तः )

विदूषकः— सच्चवअणो खु सच्चाआरिओ ।

सत्यवचनः खलु सत्याचार्यः ।

राजा— द्रक्ष्यामस्सन्निहितेन कार्येण । ( निःश्वस्य )

खिन्नामिव बाह्यकरणग्रामानुविधानपारतन्त्र्येण ।
स्वच्छन्दवृत्ति हृदयं स्वयमखिलं धावते विषयम् ॥ ३७ ॥

कोऽस्य विनोदनोपायः ।

विदूषकः— रसंतरव्वासङ्गेण विम्ह्अरणिज्जो एसो अहिणिवेसो ।

रसान्तरव्यासङ्गेन विस्मरणीय एषोऽभिनिवेशः ।

राजा— ( विहस्य ) अभिभवति रसान्तराभिनिवेशमादिमरसन्या-

सङ्गः न पुनरभिभूयते । भवतु तदपि तावद्द्रक्ष्यामः । उपवनमार्गमादेशय ।

विदूषकः— इदो इदो भवं । ( उभौ परिक्रामतः )

इत इतो भवान् ।

विदूषकः— ( प्रवेशं नाटयन् ) इदं खु पेरंतणिरूढणोमालिआवलम्बवेसळं आणीलसिणिद्धदीहदरणाळिएरसाहासहस्सणिअमिदादवसंदावसीदळं चतुद्दिसाणिविट्ठतरुणकदळीदळावद्धसामळविदाणकोमळं उज्जाणमण्डवं पविसदु वअस्सो ।

इदं खलु पर्यन्तनिरूढनवमालिकावलम्बपेशलं आनीलस्निग्धदीर्घतरनालिकेरशाखासहस्रनियमितातपसन्तापशीतलं चतुर्दिशानिविष्टतरुणकदलीदळाबद्धश्यामलवितानकोमलं उद्यानमण्डपं प्रविशतु वयस्यः ।

राजा— ( प्रविश्य समन्तादवलोक्य ) अगोचरे खलु गिरामारामस्य रामणीयकम् । तथा हि ।

तरुणपवनाघातव्याधूतनूतनकेतक-
स्तवकविगलन्माध्वीसंपातशीतलिताम्भसाम् ।
उपरि सरसामस्मिन्नुत्तानितानिनपङ्क्तयः
तरळलहरीडोलारूढास्तरन्ति शकुन्तयः ॥ ३८ ॥

अत्रैव मण्डपे मुहूर्तमास्वहे ।

विदूषकः— जं रोअदि वअस्सस्स ( इत्युभावुपविशतः )

यद्रोचते वयस्याय ।

राजा— ( अन्यतोऽवलोक्य ) वयस्य इतस्तावत् ।

पर्यायसक्तसरलायतकाण्डरूढ-
पर्णावलीकृतवितानमनोरमाणि ।
पश्योन्मिषत्प्रसवसौरभमेदुराणि
प्रच्छायशीतलतलानि लतागृहाणि ॥ ३९ ॥

( नेपथ्ये कलकलः )

विदूषकः— किण्णु खु एदं । किन्नु खल्वेतत् ।

राजा— प्रायेण मध्याह्नो वर्तत इति मज्जनशालोपस्कारकोलाहलो महानयं मदनुजीविनाम् । तत्पश्य तावदधुना कतमं विहायसो देशमलङ्करोति भगवानब्जबन्धुरिति ।

विदूषकः— ( उत्थाय परिक्रम्य ऊर्ध्वमवलोक्य ससंभ्रमम् ) अब्बह्मण्णं अब्बह्मण्णम् । ह्रीमाणहे को वि रक्खसो विअ सुवण्णमईहिं छाआहिं मं अणुलिंपदिव्व । ता परित्ताअदु पिअवअस्सो ।

अब्रह्मण्यं अब्रह्मण्यं अहो कोऽपि राक्षस इव स्वर्णमयीभिः छायाभिः मामनुलिम्पतीव । तस्मात् परित्रायतां प्रियवयस्यः ।

राजा— सखे न भेतव्यं, न भेतव्यम् । कः कोऽत्र भोः धनुर्धनुः । ( इत्युद्धतं परिक्रम्य ऊर्ध्वमवलोक्य सहर्षम् ) चारायण,

---

पाठान्तरम् । १. मनोहराणि . २. शिलागृहाणि.

दिष्ट्या वर्धसे । ननु स एव ।

समाकर्षन्नन्तश्चरणमवसुग्नाङ्गुलिदलं
वितन्वन्नामूलादपि गरुतमस्पन्दसरलम् ।
भ्रमाद्यत्पौलोमीपरिजनकरोन्मुक्तानिपत-
न्मणिच्छत्रच्छायामनुसरति हंसः परिपतन् ॥ ४० ॥

विदूषकः— ता तस्सिं एव्व मण्डवे चिट्ठावो ।

तत्तस्मिन्नेव मण्डपे तिष्ठावः ।

राजा— यथा रोचते भवते । ( इत्युपविशतः )

( प्रविश्य )

हंसः— जेदु महाराओ । जयतु महाराजः ।

राजा— स्वागतं शकुन्तचूडामणये ।

हंसः— विसेसेण महाराअस्स पसादादो ।

विशेषेण महाराजस्य प्रसादात् ।

राजा— कतमस्त्वया परिमुषितशोभः कृतो देशः ।

हंसः— विदब्भादो दमअंतीसआसादो भअवदीए सरस्सदीए पेसिदो आअदोह्मि ।

विदर्भेभ्यः दमयन्तीसकाशात् भगवत्या सरस्वत्या प्रेषित आगतोऽस्मि ।

राजा— ( सहर्षम् ) कथं प्रियसुहृदो भीमस्यैव स्वसा तत्रभवती ।

हंसः— अह इं । अथ किम् ।

राजा— ( अपवार्य ) हन्त विदर्भेष्विति. महाराजकन्यकेति त्रैलोक्यदुर्लभरूपेति च दैवज्ञेन शतशः प्रतिबोध्यमानोऽपि न स्मृतवानास्मि श्रुतचरीमेव दमयन्तीम् ।

विदूषकः— चित्तसंखेवो एद्ध अवरज्झइ ।

चित्तसंक्षेपः अत्र अपराध्यते ।

राजा— सत्यमेतत् । तथा हि ।

स्फुलिङ्गा इव संस्काराश्चिन्ताक्षोभैस्तनूकृताः ।
उद्बोध्यमाना यत्नेन नोद्बुध्यन्ते कथश्चन ॥ ४१ ॥

कथं सा मया लभ्या ।

विदूषकः— किं वि चिंतेसि । णं परिक्खिदं[1] एव्व सच्चाअरिअस्स वअणम् ।

किमपि चिन्तयसि । ननु परीक्षितमेव सत्याचार्यस्य वचनम् ।

राजा— मा मैवम् । दैवज्ञानामपि खलु व्याहाराः ।

वक्तुर्वानवधानेन श्रोतुर्वा भाग्यमान्द्यतः ।
न फलन्ति फलन्तो वा केवलैस्स्युर्मनोरथैः ॥ ४२ ॥

विदूषकः— अहो दे रागगद्धिणो विसमदंसित्तणं जं विवक्खिदे कज्जे वत्तुणो वा पमादो सोदुणो वा मंदभाअहेअत्तणं गवेसणाअम् । अणभिमदेसु उण राम्बाणा सच्चाअरिअस्स वाहारा ।

---

पाठान्तरम् । १. वि परिक्खिदं.

अहो ते रागगृध्नोः विषमदर्शित्वं यद्विवक्षिते कार्ये वक्तुर्वा प्रमादः श्रोतुर्वा मन्दभागधेयत्वं गवेषणीयम्। अनभिमतेषु पुना रामवाणाः सत्याचार्यस्य व्याहाराः।

राजा— (आत्मगतम्) किमधुना। प्रक्ष्यामस्तावदेनम्।
(प्रकाशम्) किं नु कारणं भगवत्यास्तत्र सन्निधाने।

हंसः— इमादो एव्व जाणीअदु। (इति लेखमर्पयति।)
अस्मादेव जानातु।

विदूषकः— (गृहीत्वा उन्मुच्य) अह्महे णेमाइं अह्माणं अक्खराइं। (इति राज्ञो हस्ते समर्पयति।)
अहो नेमान्यस्माकमक्षराणि।

राजा— (साश्चर्यं निर्वर्ण्य) किं भगवत्या एव करारविन्देन व्यापृतम्।

हंसः— अह इम्। अथ किम्।

राजा—

आसन्ना हारमुक्तासममथ च मिथस्सङ्गता नैकवर्णाः[1]
भान्त्येवान्योन्यचित्रंव्यतिकरविधुराः पङ्क्तयो नातिदूराः[2]।
नास्पष्टा नापि वक्रास्तदपि परिगता रेखिकास्सूक्ष्मभावं
माँ[3] वा वस्तुप्रभावः क्व पुनरिदमहो कौशलं वर्णलेखे[4]॥

(सरस्वतीं प्रति सबाष्पगद्गदम्)

त्वमसि परमं तत्त्वं त्वं नादबिन्दुकलामयी
त्वमसि च परं शब्दब्रह्म त्वमेव जगन्मयी।

---

पाठान्तरम्। १. चिह्न. २. नापि दूराः. ३. मा नामास्तु. ४. लेख्य.

तव यदि तनूरेषा वर्णात्मना न विवर्तते
निपतति तमस्यन्धे निश्शेषमम्ब जगत्त्रयम् ॥ ४४ ॥

( इति लेखमक्ष्णोश्शिरसि चार्पयन्वाचयति । )

"स्वस्ति वत्साय नैषधाय

निर्माय रत्नं किमपि त्रिलोकी-
लावण्यसारेण पितामहो वः ।
निर्माणवैफल्यभियादिशन्मां
भोक्तारमस्यानुगुणं वरीतुम् ॥ ४५ ॥

श्रेयांसि बहुविघ्नानीति शुभस्य शीघ्रमिति च श्रुतमेव वत्सेनापि वृद्धमुखात् । अतस्तदनुरूपमाचरितव्यमन्यच्च हंसमुखादवगन्तव्यम् ।" इति ।

राजा— ( स्वगतम् ) रत्नमिति युक्तमुक्तं भगवत्या । ( प्रकाशम् ) कियान्मयि निर्व्याजः पक्षपातो भगवत्याः । किं नु खलु मया तदनुरूपमाचरितव्यमिति ।

हंसः— ( कर्णे ) एव्वं विअ । एवमिव ।

राजा— अनुगृहीतोऽस्मि ।

हंसः— मज्झण्णो वट्टइ मणिकण्णिआवगाहणपआणसमओ भअवं-तस्स । मए वि सण्णिहादव्वम् ।

मध्याह्नो वर्तते मणिकर्णिकावगाहनप्रयाणसमयो भगवतः । मयापि सन्निधातव्यम् ।

---

पाठान्तरम् । १. सत्यमुक्तं.

राजा— साधय महोपकारिन् । सन्तु च पुनः अचिरादेव नस्समागमप्रबन्धाः ।

हंसः— ण विह्मरणीओ अअं जणो । ( इति निष्क्रान्तः । )

न विस्मरणीयोऽयं जनः ।

( नेपथ्ये )

वैतालिकौ— सुखाय मध्यमा सन्ध्या भवतु देवस्य ।

एकः—

आमुक्तहारलतमादृतगन्धपङ्कं
उन्मुक्तकञ्चुकमुपोढदुकूलचेलम् ।
आवीज्यमाननालिनीदलतालवृन्तं
अद्य क्षिपन्ति दिनयौवनमानताङ्ग्यः ॥ ४६ ॥

अपरः—

स्वच्छन्दप्रचरन्मदान्धमहिषव्याधूतशृङ्गाहति-
क्षुभ्यत्पङ्ककलङ्कपल्वलपयोलुण्ठाकचण्डातपाः ।
दृश्यन्ते परिपाकपाण्डरदलव्याकीर्णजीर्णाटवी-
रिङ्खद्दावशिखाचटच्चटरवोन्मिश्रा गिरिश्रेणयः ॥ ४७ ॥

राजा— तदेहि मज्जनशालामेव गच्छावः ।

( इति निष्क्रान्तास्सर्वे )

॥ इति प्रथमोऽङ्कः ॥

---

पाठान्तरम् । १. आमुक्त. २. आवर्ज्यमान.

## ॥ अथ द्वितीयोऽङ्कः ॥

( ततः प्रविशत्युपविष्टश्चिन्तां नाटयन्वाचस्पतिः । )

वाचस्पतिः— ( प्राङ्मुखमञ्जलिं बद्ध्वा )

प्रणमामः परं ब्रह्म भवानीशङ्करात्मकम् ।
स्वस्ति गोब्राह्मणेभ्योऽस्तु सुप्रातं दिनमस्तु नः ॥ १ ॥

( इति चक्षुषी उन्मील्य ) कथं व्युष्टैव रजनी । अद्य खलु

संगृह्णन्ति हिमच्युतः परिमितानिन्दोश्चकोराः करान्
आसीदन्ति शनैश्शनैरभिमुखापाङ्गा रथाङ्गाह्वयाः ।
सत्रासप्रतिबुद्धतापसवटुप्रारब्धनिद्रास्खल-
द्वर्णग्रामकसामगीतिमुखरक्रोडास्सनीडाश्रमाः ॥ २ ॥

( नेपथ्ये )

सुप्रभातमखिलसुरासुरवन्दितचरणारविन्दस्य राजाधिराजमूर्धन्यस्य भगवतो महेन्द्रस्य । संप्रति हि

आसीद्व्युष्टा रजनिरलमित्यालपन्त्योऽपि वेगात्
अर्धोद्गीर्णैस्त्वमित इत इत्यक्षरैर्व[2]च्यमानाः ।
मुक्ताः कृ[3]च्छ्रादपि च कुचयोर्गाढमालिङ्ग्य कान्तैः
आकृष्यन्ते पुनरपि पटे[4]ष्वत्र गन्धर्वकान्ताः ॥ ३ ॥

अतिप्रभाता रजनी । पश्यतु देवः ।

---

पाठान्तरम् । १. अर्धोद्गीर्णैः. २. व्यञ्जयमानाः. ३. कुञ्जादपि. ४. पदेषु-

आसीदन्मथमाचलेन्द्रमकुटीमद्यापि नाक्रामति
द्यामेष द्युमणिर्विचित्रमभितस्तावत्करैः क्रीडितम् ।
प्रम्लाने मुदितं मनाक् प्रहसितं प्रक्रान्तनिद्रारसे
व्याकोचन्मुकुलीकृते च यदभूदम्भोरुहं कैरवे ॥ ४ ॥

वाचस्पतिः— (विहस्य) राजमूर्धन्यतानुगुणा एव गुणा महेन्द्रस्य । पश्य ।

नारी विदर्भतनया न च सानुरक्ता
स्वस्मिन्न चापि सुलभं परिणेतुमेनाम् ।
अस्यामशेषसुरयौवतयाच्यमान-
याद‍ृच्छिकाक्षिवलनोऽपि हि यः प्रमूढः ॥ ५ ॥

हन्त कथमनुभूतफलोऽपि गौतमदारेषु न प्रतिपद्यते कर्तव्यमकर्तव्यं च । अथवा किमेतेन । सा हि दुर्लङ्घ्यपाता भगवती मदनहस्तपञ्चशरी, यां किल

त्रिभिरेवाभिनिर्वृत्ते त्रिलोकीविजयोत्सवे ।
उत्तंसयन्त्रतेश्शेषमुपयुङ्क्ते मनोभवः ॥ ६ ॥

तदेवं मदनशरपरागपरिपातदूषितमिव [1]मतिमतामपि शास्त्रनिर्मलं चक्षुर्न गृह्णाति विषयेषु निम्नमुन्नतं वा । अपि च पुनरनर्थादनर्थान्तरमद्यापतितम् । यत्किल

प्रकृत्या कामुके शक्रे प्राप्तोऽयं वैणिको मुनिः ।

---

पाठान्तरम् । १. महतामपि.

प्रागेव कलुषं चक्षुः पांसुना तच्च दूषितम् ॥ ७ ॥

तस्य किल कलहानुपलम्भनिर्विण्णं चक्षुः कण्डूलमिव घुरुघुरायते नाम मुनिपाशस्य ।

अपि तत्प्रथमद्वन्द्वमन्योन्यस्यूतविग्रहम् ।
शक्नोति विश्लेषयितुं स हि कर्णेजपो मुनिः ॥ ८ ॥

किं पुनरमरेन्द्रनैषधयोर्विरोधमापादयितुम् । ( साश्चर्यम् ) पश्यत मृदुमर्दिनः कालस्य वैषम्यम् । यदस्मिञ्जगदन्यादृशमिवास्ते । तथा हि ।

उपरतमभूच्छारैरुद्वृत्तनिग्रहणव्रतं
जगति विरतश्शापश्शान्तो मुनिस्स च कोपनः ।
अशरणमिवाशेषं व्यत्यासयन्तमिदं जगत्
न खलु शपति क्रुध्यत्येको नियच्छति वाप्यमुम् ॥ ९ ॥

मन्त्रितं च नाम रहसि तेन महेन्द्रसंसदि पूर्वरात्रे त्रैलोक्यरत्नं दमयन्ती सा तवैवोचिता सुलभा चेति । तदत्र कथं समीकर्तव्यम् । ( विचिन्त्य ) समीकृत्य वा किमनुभूयते । यतः

राज्यग्रहगृहीतानां राज्ञामन्यादृशी मतिः ।
असिद्धिर्मन्त्रिमन्त्रेण सिद्धिस्स्वस्यैव वैभवात् ॥ १० ॥

इति । अथवा न शोचितव्यम् । प्रकृतिरियं जीवलोकस्य यत्किल

---

पाठान्तरम् । १. मृदूपमर्दिनः.

प्रासादप्रतिमा इव सकलभारवहनमभिनयन्तः परिक्लिश्यन्ते राजपिण्डोपजीविनो मन्त्रिजनाः । ( अग्रतोऽवलोक्य ) विदर्भनगरवृत्तान्तविचारणाय प्रेषितो विश्वावसुः परिम्लानमुख इत एवाभिवर्तते ।

( प्रविश्य )

विश्वावसुः— ( उपसृत्य ) भगवन्नभिवादये ।

वाचस्पतिः— अभिमतेन युज्यस्व । कः पुनर्वृत्तान्तो विदर्भेषु ।

विश्वावसुः— यः परिचिन्तितो भगवता ।

वाचस्पतिः— ( तस्य हस्ते हस्तमास्फालयन् ) अपि सन्निहिता तत्रभवती शारदा ।

विश्वावसुः— न केवलं सन्निहिता, निवृत्तसत्यलोकगमनाध्यवसाय[1]तिरूढमूला च तत्रैव सा ।

वाचस्पतिः— अथ सन्दिष्टमपि नलाय भगवत्या ।

विश्वावसुः— इयं तु विरला किंवदन्ती ।

वाचस्पतिः— सत्यैव सा ।

विश्वावसुः— कथमिव ।

वाचस्पतिः— कुण्डिननगरबाह्योद्याने कुलदेवताराधनव्याजेन समानीय वैदर्भीं संयोजयिष्यामीति सन्दिष्टमेव नलाय शारदया । शंसितं हि तथा नः पूर्वेद्युरनेन पथा सत्यलोक-

---

पाठान्तरम् । १. निरूढमूला.

मुपतिष्ठमानेनानभिज्ञातनूतनास्मन्नगरवृत्तान्तेन पितामहशता-ङ्गयुगसव्यभागोपान्तवाहिना हिरण्मयेन हंसेन ।

विश्वावसुः— तर्हि सूनृतमेव ।

वाचस्पतिः— पुनः कीदृशी किंवदन्ती ।

विश्वावसुः— न कापि नूतना ।

नलासक्ता भैमी स्वयमनुमतं तच्च विधिना
त्रिलोकीनाथस्तामभिलषति शक्रोऽप्यतिबली ।
न जानीमः कीदृक् परणतिरिदानीमिति परा
प्रवृत्तैका वार्ता यदि पुनरुभौ तत्र मिलितौ ॥ ११ ॥

वाचस्पतिः— ( साक्षेपम् ) कीदृगिव भविष्यति । ननु निश्चितः परिणामः ।

विश्वावसुः— निश्चित एव भगवतः प्रसादेन कल्याणोदर्क भविष्यतीति । सचिवसंपत्तिर्हि भूभुजां सर्वकामदुघा कल्प-लता । तथा हि ।

निरालम्बाः श्रियो राज्ञां लोका इव नभस्सदाम् ।
ध्रियन्ते मन्त्रिणो मन्त्रैस्स्कन्धैरिव नभस्वतः ॥ १२ ॥

तच्चिन्तयतु महाभागः शिवमत्र पन्थानम् ।

वाचस्पतिः— ( विचिन्त्य सैमुखभङ्गं ) अवितताथों न कश्चिदिहो-पायः ।

---

पाठान्तरम् । १. सद्यमुखभङ्गं. २.अविप्लुतार्थो.

विश्वावसुः— ननु सिद्ध एवायमुपायः। अद्य किल महतीयं वार्ता विदर्भेषु भीमो राजा दमयन्त्याः स्वयंवरं कारयिष्यतीति।

वाचस्पतिः— (विहस्य विश्वावसोश्चरमाङ्गं परामृशन्) सुमते तदेव नो विघटनीयम्। प्रागेव किल सा नलाभिलाषिणी। ततश्च निम्नार्थिनः पयसः परीवाहप्रदर्शनामिव निखिलमिदमनुकूलं तदध्यवसायस्य।

विश्वावसुः— दूत्यं वा तर्हि प्रस्तूयताम्।

वाचस्पतिः— केन। कस्मै।

विश्वावसुः— अप्सरोभिरासञ्जयितुमस्याश्चित्तवृत्तिमस्मत्स्वामिनि।

वाचस्पतिः— उभयमप्येतत् अपथमेव।

विश्वावसुः— कथमिव।

वाचस्पतिः— प्रथमं तावदसङ्भ्यर्थितामन्यमुखेन प्रार्थयते कथमसाविति बलवान्भवति वैरानुबन्धो नलस्य।

विश्वावसुः— (सपरिहासम्) बलवद्भी वेपामहे।

वाचस्पतिः— वत्स मा मैवम्। परिज्ञायते हि सप्तद्वीपविजयिनो नैषधस्य पराक्रमोत्कर्षः शतशस्त्वयैव देवासुरसमर—साहाय्यकप्रवृत्तस्य। द्वितीयं च ननु त्वयैव दृश्यताम्।

साम्राज्यं यदि सप्तमार्णवतटीविश्राम्यदाज्ञाक्षरं
सौन्दर्यं यदि मुद्रिताः स्मरगिरस्सा चेन्मतिः के वयम्।

शौर्यं चेत्पुनरन्यदेव तदिति श्लाघ्ये नले सर्वतः
सक्ता भीमसुता कुतः खलु गुणादिन्द्रे निधत्तां मनः ॥

अयं पुनरुपाय इव।

विश्वावसुः— क इव।

वाचस्पतिः— स एव दूत्ये वरणीयः। अथ तर्हि न कोपो भविष्यति। अपि च तेनैव प्रवर्तिते दूत्ये महेन्द्रस्य पशुरयमेवमर्थिनीमपि मां परस्मै दातुमभिलषतीति वा यस्यायमीदृशो दूतः स कीदृगिति वा रज्येदपि नाम जातु भीमसुता पाकशासने।

विश्वावसुः— रज्येदेव सा यदि नलो दूतस्स्यात्। कः खलु मन्दधीरपि नाम करस्थं रत्नमुत्सृज्य काचं गवेषयते।

वाचस्पतिः— यत्किञ्चिदेतत्। किं न श्रुतस्त्वया दुस्त्यजस्सङ्कल्पो नैषधस्य।

अपि दद्यामिदं राज्यमपि दद्यां च जीवितम्।
अर्थिनो न तु पश्येयमसम्पूर्णमनोरथान् ॥ १४ ॥

विश्वावसुः— (सहर्षम्) यद्येवं विघटितो नलपरिग्रहो दमयन्त्याः का पुनरद्याप्यपरिपूर्णता भवताम्।

वाचस्पतिः— स एव न विघटित इति।

विश्वावसुः— कुतः।

वाचस्पतिः— त्रिभुवनविदिता हि वदान्यता महानुभावता च

वीरसेनजन्मनो राजर्षेः । ततश्च निखिलमप्येतत् गुणमेव मन्यमाना गुणगृह्या सूक्ष्मदर्शिनी च दमयन्ती तमेव वृणुयात् । अन्यथैवंविधयापि तया वरयेदेव वा नैषधं वाणी ।

विश्वावसुः— ( सविषादम् ) कथं तर्हि विघटनीयोऽयं यत्नः ।

वाचस्पतिः— न कथञ्चित् । परं तु यद्येष दुर्ग्रहः परिगृहीतैव सा भवत्यवस्कन्दनीया ।

विश्वावसुः— कः खलु कार्कोटफणामणये करं प्रसारयति ।

वाचस्पतिः— सत्यं अस्ति तु पुनरत्र बहु वक्तव्यम् । अतिवर्तते च नस्समयः सन्ध्यामुपासितुम् । तदेहि प्रस्थापय पाकशासनम् ।

विश्वावसुः— प्रस्थिता वा वयमप्रस्थिता वा किं करिष्यामः केवलमतयः ।

वाचस्पतिः— वत्स, मा मैवम् । कः खलु ज्ञास्यति कटाक्षवृत्तिं देवस्य । मन्त्रिणः किल नाम मन्त्रयितुं प्रभवः शास्त्रदृष्टेन पथा, न पुनः संपादयितुमपि कार्याणि । तथा हि ।

वन्ध्या इव न वन्ध्याः स्युरवन्ध्या इव चान्यथा ।
कार्येषु मन्त्राः प्रायेण कटाक्षानुगुणा विधेः ॥ १५ ॥

तदेहि, यथोक्तनिर्वर्तनायाहमपि मन्दाकिनीतीरमेव गच्छामि । ( इति निष्क्रान्तौ )

॥ शुद्धविष्कम्भः ॥

---

पाठान्तरम् । १. एतदारभ्य प्रसारयतीत्यन्तं गकोशे नास्ति. २. संसाधयितुं.

( ततः प्रविशति रथस्थस्समीपविमानस्थेन विश्वावसुना उपास्यमान इन्द्रो मातलिश्च )

इन्द्रः— मातले विसृज विदर्भानुद्दिश्य त्वरितं रथरश्मीन् ।

मातलिः— ( कर्णं दत्वा ) आयुष्मन् किमाज्ञाप्यते । अवतीर्णानि कर्णपुटीमायुष्मतो न शासनाक्षराणि ।

मञ्जीरैर्नटनार्भटीमुखरितैः स्ववरिवामभ्रुवां
मन्द्रस्निग्धरवैश्च किन्नरकरव्यापारितैर्मर्दलैः ।
श्लाघाश्लोकशतैश्च चारणगणप्रोद्गीयमानैरियं
शब्दब्रह्ममयीव संप्रति यतो जागर्ति लोकत्रयी ॥१६॥

इन्द्रः— ( किञ्चिदुच्चैः) ननु वदामि विसृज विदर्भानुद्दिश्य त्वरितं रथरश्मीनिति ।

मातलिः— विसृजामि तावत् । अद्य खलु ।

आसीदद्भ्रजवाजिसङ्कुलभवन्नासीरसीमाचल-
द्वेत्रिव्यापृतहेमदण्डपतनाशङ्काभिराशङ्किताः ।
भूयो मौलिभिरञ्जलिस्तवकितैस्सङ्गीभवन्तस्सुराः
पश्यैते कलयन्त्यलब्धचरणन्यासावकाशां पुरीम् ॥

तदतिक्रामत्यायुष्मानमरावतीपर्यन्तमण्डलानि ( किञ्चिदन्तरं गत्वा ) अतिक्रान्ता वयममरपुरोपशल्यानि । यतः ।

निर्मज्जत्त्रिदशावरोधतरुणीवक्षोजभृङ्गक्षर
त्कस्तूरीघनसारकुङ्कुमरजस्सम्बाधजम्बालिताः ।

---

पाठान्तरम् । १. व्याहृतवेम.

दृश्यन्ते मृदुवद्धवृन्तवलयव्यामुक्तसद्यःपत-
न्मन्दारप्रसवानुवद्धमधुरा मन्दाकिनीवीचयः ॥ १८ ॥

इन्द्रः— कथमद्यापि मन्दाकिन्येव ।

मातलिः— ( सोत्साहम् ) अवलोकयत्वायुष्मानितो मातलेः पाणिकौशलम् । ( इति रथरश्मीनुत्सृजति )

विश्वावसुः— ( रथवेगं निरूपयन् ) महाराज दीयतामिह तावद्दशवती दृशाम् । फलवानस्तु रथपतनवेगः कटाक्षार्पणानुग्रहेण । अद्य खलु

यद्दृष्टं पुरतस्तदेति जघनं भूयस्समालोकने
यैरुत्तानितमाक्षि वीक्षितुमिदं तैरेव तन्न्यस्तिम् ।

किं वहुना ।

यत्राख्यातुमुपक्रमे विनिपतन्त्यत्रेति तत्रैव मे
संवृत्ता भवतश्शताङ्गरभसात् भूतार्थगर्भा गिरः ॥ १९ ॥

इन्द्रः— कतमस्मिन्नवकाशे वयमधुना वर्तामहे ।

मातलिः— अध्यर्धयोजने धरणेः ।

इन्द्रः— निर्धम्यन्तां रथरश्मयः । मन्दं खलु द्रष्टव्या अदृष्टचरा भूँविभागाः ।

मातलिः— यदाज्ञापयत्यायुष्मान् । ( इति तथा करोति )

इन्द्रः— कोऽयमग्रतस्सर्वश्वेतो गिरिः !

---

पाठान्तरम् । १. तत्र स्थितम् २. नियम्यन्तामितो. ३. भूमिभागाः

विश्वावसुः— नन्वयमावसथं भगवतश्शशाङ्कशेखरस्य शैलराजः कैलासः ।

अस्मिन्विस्मयधाम्नि सर्वजगतामर्केन्दुकान्तोपल–
प्रायासु क्षितिषु स्वयं विहरतश्चन्द्रार्धचूडामणेः ।
दृश्यन्तामपसव्यसव्यनयनव्यापारमात्रादपि
ज्वालाभिर्जटिलाः क्वचित्क्वचिदमी भागाः पयःस्यन्दिनः ॥

इन्द्रः— ( अन्यतोऽवलोक्य ) विश्वावसो किमत्राद्भुतम् यत्र बद्धाञ्जलिपुटा महर्षयः परिगलितबाष्पसंरुद्धलोचनाः सङ्गीभूय परिष्टुवन्ति गद्गदया गिरा ।

विश्वावसुः— अर्च्यन्तामाक्षिभिरखिलसुरमौलिविश्रान्तरेणवः पदपंक्तयः परतत्त्वस्य ।

इन्द्रः— ( साश्चर्यं निर्वर्ण्य सविनयमञ्जलिं बद्ध्वा )

पुंसापि प्रथमेन या न कलिता भूदारतामेयुषा
निर्विण्णाश्श्रुतयो विचिन्त्य च पुनर्या एव वन्ध्यश्रमाः ।
अव्यक्ता गिरिगैरिकेषु परितस्ता एव भाग्येन मे
धन्यैराक्षिभिरर्चिता भगवतश्शंभोः पदश्रेणयः ॥ २१ ॥

विश्वावसुः— ( अन्यतो दर्शयन् ) सहस्रमपि दृशामत्र सफलयतु महाराजः । परिदृश्यते गङ्गानिपातपावितोत्सङ्गा भगवती वाराणसी ।

यत्रैकं श्रुतमक्षरं पशुपतेर्हेतुश्श्रुतीनां कृतौ
सद्यो रोहति चाष्टधा तनुभृतां यत्रैकमुप्तं वपुः ।

यत्रैकाभ्रनदीकणेऽपि विधृते सर्वैव सा धार्यते
सा दिव्याद्भुतवैभवा कविगिरां पारे हि वाराणसी ॥ २२ ॥

इन्द्रः— अगोचर एव वाङ्मनसयोः आनन्दवनी ।

( इति सप्रश्रयं प्रणम्य )

अस्मत्पुरे दिविषदां शतशोऽपि यस्यां
अद्यापि विश्रमफलान्यवगाहनानि ।
आब्रह्मकीटमवगाहजुषामिहैषा
कैवल्यहेतुरिति काशि तव प्रभावः ॥ २३ ॥

मातलिः— ईदृश्येवेयम् ।

अत्यन्तसिद्धाञ्जननिर्मलाक्षैः
तपोधनैरप्यनवेक्षितं यत् ।
आलक्ष्यते धाम तदत्र यस्यां
आत्यन्तिकेनाक्षिनिमीलनेन ॥ २४ ॥

( अन्यतो दर्शयन् )

सस्पर्धोपनिरुध्यमानयमुनाकल्लोलमूलस्थली-
मग्नोन्मग्नविसारिपाण्डरवलत्स्वर्गापगाम्भःप्लवः ।
प्रत्यासीदति नः पचेलिमतपःसंभारसंभावित-
प्रत्यासङ्गकृतार्थसार्थनिविडाभोगः प्रयागः पुरः ॥२५॥

इन्द्रः— अभिमतपदारोहनिःश्रेणिस्सरिदियमङ्गभाजाम् ।

( स्वगतम् )

---

पाठान्तरम् । १. यत्रैकाभ्रनदीकणे. २. विभ्रमफलानि.

मज्जत्यत्र कुतो न नाम सलिले चन्द्रस्सरोजानि वा
लभ्या येन विदर्भराजदुहितुस्सा वक्त्रविम्बोपमा ।

अथवा के वयं तान्युपालब्धुम् । पङ्किल एव पादतले [1]प्रपदमस्माभिरुन्मृज्यते । यतः ।

अस्माभिः किमिति व्यगाह्यत न सा हा धिक् भ्रमो यावता
भमीप्रेमनवावताररसिकः स्यामेव साक्षान्नलः ॥ २६ ॥

विश्वावसुः— ( सहर्षम् ) प्रविष्टा एव कथमस्माभिः पर्यन्तभूमयो विन्ध्यगिरेः । पश्य पश्य ।

सन्दृश्यन्ते करीषङ्कषपवनसमुद्भूतभाण्डीरशाखा–
डोलारूढप्लवङ्गप्रकरकिलकिलारावमेदस्विकुञ्जाः ।
[2]क्षोणीभृत्कन्दरोद्यद्वनमहिषविषाणाग्रघोराभिघात-
त्रुट्यद्वल्मीकधूलीचुलुकितसरितो विन्ध्यकान्ताररेखाः ॥

अभ्यर्ण[3]भ्रमदध्वनीनपरिषन्निध्यानपर्याकुल-
क्रोशत्पक्वणवाटकुक्कुरघटाबुक्कारवोद्गारिणः ।
लङ्घ्यन्ते कतिचित् क्वचित्क्वचिदपि प्रक्रान्तचक्रानिल–
प्रेङ्खत्पाटलपांसुमांसलदिशाभोगा विभागा [4]भुवः ॥

मातलिः— इतः प्रभृत्यवतीर्णा वयं विदर्भेषु ।

नोद्भिन्नस्स्तनकु[5]ड्मलो न [6]कुटिला वाचो न तीक्ष्णा दृशो
[7]रेखा नैव तथापि यत्र सुदृशा[8]मुड्डीयते यौवनम् ।

---

पाठान्तरम् । १. परपदं. २. क्षोणीभृत्कारमाद्यद्वन. ३. भ्रय. ४. भुवां.
५. मण्डलो. ६. कुशला. ७. रेखान्नैव. ८. मुद्गीवितें यौवने.

स्पर्धन्तेऽपि च यत्र नूतनसुधासाराय वीराद्भुत-
प्रायोदारगभीरकोमलपदोद्गाराः कवीनां गिरः ॥ २९ ॥

इन्द्रः— मातले अस्ति किं विदर्भेष्वप्यमरावती ।

मातलिः— न हि न हि कुलराजधानीयं विदर्भाणां कुण्डिनपुरी ।

आरुह्य सौधशिखराण्यवलोकयन्तः
सिन्धुं हराद्रिमपि यत्र जनाः कियन्तः ।
अव्यक्तसारमनयोः प्रतियन्ति नैव
देवं रघूद्वहमहो दशकन्धरं वा ॥ ३० ॥

इन्द्रः— तदवतरामो वयमत्रैव बाह्योद्याने ।

मातलिः— यदाज्ञापयत्यायुष्मान् । ( इति सर्वेऽवतरणं नाटयन्ति । )

इन्द्रः— इयमेव सा नगरी यत्र सा भीमसुता । ( इति निःश्वस्य )

विश्वावसो किमितः परमाचरितव्यमित्यादिष्टमाचार्यपादैः ।

विश्वावसुः— ननु निवेदितमेव निखिलमपि तदानुपूर्व्येण ।

इन्द्रः— सत्यं उत्कण्ठैव पुनः पुनरनुयोजयति ।

विश्वावसुः— किं विस्तरेण, नलासक्ता भैमी नलमुखादेव ल-
ब्धव्येति ।

इन्द्रः— ( स्वगतम् )

मय्यर्थिनि जगद्वीरमौलिविश्रान्तशासने ।
मानुषं सा महीमात्रनाथं कथमिवेहताम् ॥ ३१ ॥

---

पाठान्तरम् । १. गिरां सूक्तयः.

प्रायेण कार्यचिन्तानिर्विण्णचेतसा परिहारोपाय एव निर्दिष्टो भगवता वाचस्पतिना । ( विमृश्य ) अपि सत्यमिदं भवेत् । कथं वा पुनरत्र तत्त्वमवबुध्यताम् । ( विचिन्त्य ) इहत्येभ्य एव निश्चेतव्या इहत्या किंवदन्ती । ( अग्रतोऽवलोक्य ) आः कथमग्रत एवेयमनर्घाभरणपाणिः कामपि कामशरपीडितां परित्रातुकामेव पल्लवभङ्गानित-स्ततः सञ्चिनुते । प्रायेण चैतया वैदर्भीपार्श्ववर्तिन्या भवितव्यं, इयमेव व्याजेन प्रष्टव्या । ( प्रकाशम् ) मातले, परिश्रान्ता रथवाजिनः, विश्रामय तावदेनान् ।

मातलिः— यदाज्ञापयत्यायुष्मान् । ( इति निष्क्रान्तः )

इन्द्रः— ( विश्वावसुं प्रति ) परिज्ञातव्या हि नः प्रवृत्तिरत्र दमयन्त्याः । तदुपगम्य भवानिमामुक्तिप्रत्युक्तिकामुपक्र-मताम् । वयमपि तिरस्करणिकानिगूढाः शृण्वन्त एव वर्ता-महे ।

विश्वावसुः— यदाज्ञापयति देवः ( इत्युपसृत्य स्वगतम् ) कतमेना-मन्त्रितेन संभाव्यतामेषा । ( विचिन्त्य ) भवत्वेवं तावत् । ( प्रकाशम् ) कल्याणि कुत एकाकिनी भवत्यत्रास्ते

( प्रविश्य )

चेटी— ( ससंभ्रममुपसृत्य ) को उण एसो इमाइं पेच्छइ । ( इति पल्लवभङ्गानाच्छादयति )

कः पुनरेष इमानि प्रेक्षते ।

**विश्वावसुः**— ( स्वगतम् ) अतिचकितेयं वर्तते । कथमस्या विस्रम्भस्संपाद्यताम् । ( विमृश्य ) अयं तावदेकः पन्थाः । ( प्रकाशम् ) सखि न बाह्योऽयं जनश्चिन्त्यताम् । तदेकयूथप्रविष्टे जने कस्तवायमातङ्कः ।

**चेटी**— ( स्वगतम् ) को उण एसो अपरिचिदो वि अंतरंगोत्ति णिस्सङ्कं वाहरइ । ( विमृश्य ) सो एव्व एसो जो णिसधेसरेण पट्ठिदेण हिअआणिव्विसेसो भद्दमुहो णाम णिअसमाअमवुत्तंतणिवेदइत्तओ पेसिदो सरस्सईए सआसं ति सुणीअदि । ता ण एदस्सिं संकिदव्वम् । ( उपसृत्य प्रकाशम् ) किण्णु खु भवं णिसधेसरेण पेसिदो ।

कः पुनरेषोऽपरिचितोऽपि अन्तरङ्ग इति निश्शङ्कं व्याहरति । स एवैषः यो निषधेश्वरेण प्रस्थितेन हृदयानिर्विशेषो भद्रमुखो नाम निजसमागमवृत्तान्तनिवेदयिता प्रेषितः सरस्वत्याः सकाशामिति श्रूयते तन्नैतस्मिन् शङ्कितव्यम् । किं नु खलु भवान् निषधेश्वरेण प्रेषितः ।

**विश्वावसुः**— ( स्वगतम्, सहर्षम् ) आः किमितो वक्तव्यमित्यप्रतिपत्तिमूढे मयि गतिरनयैव दर्शिता । ( प्रकाशम् ) अथ किम् ।

**चेटी**— अवि तुमं भद्दमुहो । अपि त्वं भद्रमुखः ।

**विश्वावसुः**— ( स्वगतम् ) हन्त नामाप्युपदिष्टमनयैव ( प्रकाशम् )

---

पाठान्तरम् । १. चकितेव. २. किमितो. ३. मप्रातिपत्तिमूढे.

अथ किम् ।

इन्द्रः— ( स्वगतम् ) इदमेकं परिज्ञातं प्रार्थयते नलो वैदर्भीमिति । अस्मिन्नियमनुरक्ता न वेति तु विचारणीयम् ।

चेटी— अह्माहे भद्दमुह निसधेसरसमाअमवुत्तन्तनिवेदइन्तअस्स तुह दंसणेण जीविदह्मि । अवि दाणिं पिअजणसमाअमसंभावणाए धारेदि मे भट्टिदारिआ जीविदम् ।

अहो भद्रमुख निषधेश्वरसमागमवृत्तान्तानिवेदयितुस्तव दर्शनेन जीवितास्मि । अपीदानीं प्रियजनसमागमसम्भावनया धारयति मे भर्तृदारिका जीवितम् ।

विश्वावसुः— ( आत्मगतम् ) अपि प्रस्थितस्स राजा ।

इन्द्रः— ( अपवार्य, सनिर्वेदम् ) विश्वावसो श्रुतमधुना श्रोतव्यम् । किमद्यापि नः प्रत्याशा । बलवदनुरक्ता भैमी नैषधे ।

विश्वावसुः— मा मैवम् । न हि विप्लुतार्था वाचः कदाचिदपि वाचस्पतेः । सन्निधास्यत्यचिरादत्र नैषधोऽपि । तमेव दूत्ये वृणुमः ।

इन्द्रः— ( विहस्य ) इदमशक्यं कर्तुम् । ननु ममेदानीम्

याः किञ्चित्पतिता मयीति जननं धन्यं जगन्मन्यते
यासां भान्त्यधुनापि हन्त तृणवद्देवाश्च वा दानवाः ।
ता एता नवशिक्षितार्थनविधिन्यक्कारसंमीलिता
लज्जन्ते बलवन्नलस्य वदनं द्रष्टुं सहस्रं दृशः ॥ ३२ ॥

विश्वावसुः— ( स्वगतम् ) हन्त लज्जयत्येनमनभिनवो याच्ञावतारः स्वामिनम् । अन्तरेण च नलाभ्यर्थनामस्य न पश्यामि कार्यसङ्घटनम् । कथमिदमापतितम् ।

इन्द्रः— [1]अनयैव तावत् । ( इत्यर्धोक्ते )

विश्वावसुः— ज्ञातं ज्ञातम् । अन्यमुखेन दूत्यमनभिमतं वाचस्पतेः ।

इन्द्रः— भवत्त्वेवमियता किं दुष्यति । चित्तवृत्तिमेव वा [2]तावत् ज्ञास्यामः । प्रसञ्जय किञ्चिदस्मदभ्यर्थनाम् ।

विश्वावसुः— अस्तु दृश्यतां तदपि । ( चेटीं प्रति ) अपि सखि श्रुतमिदानीं प्रार्थयते तव भर्तृदारिकां महेन्द्र इति ।

चेटी— ( सविषादम् ) ण केवलं मए भट्टिदारिआए वि अज्ज सुदो एसो अणत्थो ।

न केवलं मया भर्तृदारिकयापि अद्य श्रुत एषोऽनर्थः ।

इन्द्रः— अलमुपसंह्रियतामयं प्रसङ्गः । अनर्थ इति गिरैव सत्यमाप्यायिता कर्णपुटी ।

चेटी— तदो किल णलपरिग्गहपच्चूहसंकाए विसेसरूढमअणातंका परिच्चत्तनिहिळभूसणा पल्लवसअणेसु वि ण णिव्विसदि णो भट्टिदारिआ ।

ततः किल नलपरिग्रहप्रत्यूहशङ्कया विशेषरूढमदनातङ्का परित्यक्तनिखिलभूषणा पल्लवशयनेष्वपि न निर्विशति नो भर्तृदारिका ।

( संस्कृतमाश्रित्य ) । किञ्च

---

पाठान्तरम् । १. अनयैतावत्. २. तावदस्याः.

आयस्तापि मनोभवेन बहुशः पृष्टा सखीभिश्च वा
ध्यायन्ती कमपि स्वयं न खलु सा दत्ते गिरं कामपि ।
ब्रूतं यद्यथ जातु किञ्चन तदा नैकं वचः प्राक्तनं
नव्यः किन्तु नलो नलो नल इति व्याहार एकः श्रुतः ॥३३॥

विश्वावसुः— ( स्वगतम् ) उचितमेव गृहीतमुत्तरमाचार्यवचनान्यप्यविश्वसता स्वामिना ।

चेटी— कहिं दाणिं सो राआ । कुत्रेदानीं स राजा ।

इन्द्रः— ( अपवार्य ) प्रस्थितो नैषधः पथि किं विलम्बिष्यते सन्निहित इति वक्तव्यम् ।

विश्वावसुः— सत्यमेतत् । ( चेटीं प्रति ) सन्निहित एव ।

चेटी — ( सहर्षम् ) जइ एव्वं अहं एव्व दाणिं इमं वुत्तंतं भट्टिदारिआए णिवेदइस्सम् । जा खु अहं अकुसला कज्जचिन्तासु अदिमेत्तसरळहिअआ मुद्धा असारं गिरन्नीआ भट्टिणीए कज्जचिंताणुप्पविट्ठाहिं पण्डिदमाणिणीहिं सहीहिं ईरिसेसु वावारेसु णिओइदा सा एव्व ताणं पुरदो पारितोसिअभाअं होमि । ( इति सहर्षसंभ्रमं निष्क्रान्ता )

यद्येवं अहमेवेदानीं इमं वृत्तान्तं भर्तृदारिकायै निवेदयिष्यामि। या खल्वहं अकुशला कार्यचिन्तासु अतिमात्रसरलहृदया मुग्धा असारं गिरन्ती भट्टिन्याः कार्यचिन्तानुप्रविष्टाभिः पण्डितमानिनीभिः सखीभिः ईदृशेषु व्यापारेषु नियोजिता सैव तासां पुरतः पारितोषिकभाजनं भवामि ।

विश्वावसुः— सत्यमियं मुग्धैव येयमस्मास्वपि रहस्यमेवं विवृतवती ।

इन्द्रः—( निःश्वस्य ) पश्य विश्वावसो समयस्य वैषम्यम् ।

तपस्यन्त्यो यस्मै शतमपि सहस्रं युवतयो
न विन्दन्त्येका मां ननु मनुजगीर्वाणफणिनाम् ।
स एवाहं याचे स्वयमपगतव्रीडमपि यां
उदास्ते सा भैमी न परमथ शोचत्यपि कथम् ॥ ३४ ॥

अपि च । न कथञ्चिदस्यामासक्तं मनश्शक्यं निवारयितुम् । तथा हि ।

क्व वयमखिलस्वर्गस्त्रैणस्वयम्परिरम्भण-
प्रणयरसिकाः क्वेयं नारी न युक्तमिदं हि नः ।
इति किल ततो यावद्व्यावर्त्यते हृदयं मया
पुनरपि कथं तावत्तत्रैव मज्जति भूयसा ॥ ३५ ॥

अपि च स एव पुनरर्थनीयो जज्ञे ।

विश्वावसुः— हन्त कोऽयमभ्यर्थनीय इत्यस्थान एव देवस्य निर्वेदः । अपि न श्रुतमानुभाव्यमस्य राजर्षेः ।

इन्द्रः— केन न श्रुतम् । ननु तमेव

पुण्यश्लोकस्त्रिभुवनजयी भूभुजामग्रगण्यो
दाता प्राणानपि यदि भजन्त्यर्थिनः कर्णमूलम् ।
इत्थं जाने तदपि रसनामध्यमध्यासितुं नो
यान्ति व्रीडामभिनवतया हन्त याच्ञाक्षराणि ॥ ३६ ॥

विश्वावसुः—( स्वगतम् ) सर्वथाप्ययमर्थनेत्येव लज्जते । अस्मि-

पाठान्तरम् । १. मूलमध्यासितुं २ हन्त सर्वथाप्ययमात्मनेत्येव.

न्निदमन्यथाकरणीयम् । ( प्रकाशम् ) हन्त सकललोकनाथे-न स्वामिनापि मध्यमलोकमात्रपतौ निधेयेऽप्येवमस्मिन्नाज्ञापनानुग्रह एव कथमर्थनादैन्यमित्यध्यवसीयते ।

इन्द्रः— ( विहस्य ) नन्वेकमेवेदं उभयथापि ।

आज्ञापनैव सा नूनमनुकूलो विधिर्यदि ।
अर्थनादैन्यमेवेदमन्यथा यदि दृश्यते ॥ ३७ ॥

विश्वावसुः— कः प्रसङ्गस्तदन्यथाभावस्य ।

इन्द्रः— अस्तु मा वा प्रसङ्गः ।

नीतः पुरा किल मयैव यतः पुरारेः
नेत्रानलार्चिषि पतङ्गदशां मनोभूः ।
मन्ये पुराणमनुचिन्त्य तदेव वैर
मर्माणि संप्रति निकृन्तति मे ततोऽयम् ॥ ३८ ॥

( नेपथ्ये ) भअवदि साविति सण्णिहिदो सण्णिहिदो ।
भगवति सावित्रि सन्निहितः सन्निहितः ।

विश्वावसुः— अत्र मिलन्तीव मन्दंमन्दमन्तःपुरिका विदर्भपतेः । तदपसृत्य वयमन्यत्रैव नैषधागमनं प्रतीक्षावहे ।

इन्द्रः— यथा रोचते भवते । ( इत्युभौ परिक्रामतः )

विश्वावसुः— महाराज अत्रैवं चम्पकवनच्छाये मुहूर्तमास्वहे ।

( इति निष्क्रान्तौ )

॥ इति द्वितीयोऽङ्कः ॥

॥ अथ तृतीयोऽङ्कः ॥

( ततः प्रविशति सावित्री संभ्रान्ता चेटी च )

सावित्री— अनङ्गलते कुत्र सन्निहितस्स राजा ।

अनङ्गलता— उववणसमीपे एव्व । किं ण सुणीअदि भअवदीए चन्दिमाळोअचळिदजळधिघोसगभीरमंथरो महाराअणेसहस्स रहणिग्घोसो ।

उपवनसमीप एव । किं न श्रूयते भगवत्या चन्द्रमआलोकचलितजलधिघोषगभीरमन्थरो महाराजनैषधस्य रथनिर्घोषः ।

सावित्री— ( कर्णं दत्त्वा सहर्षम् )

नाक्षैर्जातु चटच्चटायितमहो चक्रैश्च न क्रेङ्कृतं
न क्वापि स्खलितं तटिल्यपि न वा विश्राम्य तस्थे क्वचित् ।
मन्द्रस्निग्धगभीरमेव रथनिर्घोषो यथा श्रूयते
प्रत्यासीदति सर्वकर्मकुशलः शङ्के तथा नैषधः ॥ १ ॥

गच्छ वृत्तान्तमिमं भगवत्यै सरस्वत्यै निवेदयितुम् ।

अनङ्गलता— तुझेहिं उण कहिं दाव गन्तव्वम् ।

युष्माभिः पुनः कुत्र तावद्गन्तव्यम् ।

सावित्री— अहं किल बलवदस्वस्थां वत्सां दमयन्तीं भीमकुलदेवतायाः भगवत्याः गौर्याः पादमूलमुपनेतुं प्रेषिता देव्या ।

प्रस्थापय त्वमपि भगवतीम् ।

अनङ्गलता— जं आणवेदि । ( इति निष्क्रान्ता )

यदाज्ञापयति ।

सावित्री— ( अग्रतोऽवलोक्य ) कथमत्रैव वत्सा दमयन्ती । इयं किल बलवदभिभूयते मदनेन । तथा हि ।

दृष्टमिदं ननु यत्किल दीपयते नाम पावकं पवनः ।
अतिवेलयति श्वासानधुना मदनानलः कृतज्ञोऽस्याः ॥ २ ॥

तदुपगम्य वत्सां प्रस्थापयामि[1] । ( इति निष्क्रान्ता )

॥ इत्यङ्कास्यम् ॥

( ततः प्रविशति यथानिर्दिष्टा दमयन्ती सख्यश्च )

दमयन्ती— ( सोत्कण्ठम् ) भण सारंगिए पाणेहिं मे सपे । अवि सच्चं तुह वअणम् । अहवा आसासस्स परिहासस्स वा ।

भण सारङ्गिके प्राणैर्मे शपे । अपि सत्यं तव वचनम् । अथवा आश्वासस्य परिहासस्य वा ।

साराङ्गिका— को एत्थ सन्देहो । ण खु जादु मए तुह्मेसु अळिआइं विण्णवीअन्ति ।

कोऽत्र सन्देहः । न खलु जातु मया युष्मासु अलीकानि विज्ञाप्यन्ते ।

दमयन्ती— हळा चन्दकळे सच्चवाइणीए सारंगिआए वअणेसु

पाठान्तरम् । १. प्रेषयामि.

मुद्धेत्ति ण मे पच्चओ।

हळा चन्द्रकले सत्यवादिन्याः सारङ्गिकाया वचनेषु मुग्धे- ति न मे प्रत्ययः।

सारङ्गिका— कहिं उण कज्जे दिट्ठं मे मुद्धत्तणम्। मए खु सो एव्व भद्दमुहो अज्ज संभासिदो।

कुत्र पुनः कार्ये दृष्टं मे मुग्धत्वम्। मया खलु स एव भद्रमुखः अद्य सम्भाषितः।

चन्द्रकला— हळा वासंतिए णिउणं उवसंकिदं पिअसहीए। जो हिओ आअदो सो हिओ एव्व णिव्वुत्तो। केण दाणिं इमा- ए संभासिदम्।

हळा वासन्तिके, निपुणमुपशङ्कितं प्रियसख्या। यो ह्य आ- गतः स ह्य एव निवृत्तः। केनेदानीमनया सम्भाषितम्।

दमयन्ती— ( सविषादं उरसि हस्तं कृत्वा ) अवि एव्वं णाम एदं वि सव्वं। एसा वि पउत्ति मम एव्व मंदभाइणीए ववदे- सेण असच्चा आसी। पुच्छ दाव वासंतिए कहिं उण दाणिं उग्घोसिदो इमाए अह्मकेर वुत्तंतोत्ति।

अप्येवं नाम एतदपि सर्वम्। एषापि प्रवृत्तिः ममैव मन्द- भागिन्याः व्यपदेशेन असत्या आसीत्। पृच्छ तावत् वा- सन्तिके कुत्र पुनरिदानीं उद्घोषितः अनया मदीयवृत्तान्त इति।

वासन्तिका— भण सारंगिए कीरिसो सो।

भण सारङ्गिके कीदृशः सः ।

सारङ्गिका— केत्तिअं मं मुद्धावेसि । किण्ण जाणे भद्दमुहं । सो खु दुदीओ णेसहो । तदणुरूवाइं तस्स आहरणाइं । वअं वि तस्स पञ्चविंसवरुसपरिमाणं । सो वि भट्टिदारिआवुत्तंतवादिणिं मं दट्ठूण हरिसणिण्णिमेसदिट्ठी चिरं संभासमाणो आसी ।

कियन्मां मुग्धापयसि । किन्न जाने भद्रमुखम् । स खलु द्वितीयो नैषधः । तदनुरूपाणि तस्याभरणानि । वयोऽपि तस्य पञ्चविंशतिवर्षपरिमाणम् । सोऽपि भर्तृदारिकावृत्तान्तवादिनीं मां दृष्ट्वा हर्षनिर्निमेषदृष्टिः चिरं संभाषमाण आसीत् ।

चन्द्रकला— हद्धि हद्धि जह भणइ एसा तह मण्णे देवो एव्व एसो कोवित्ति ।

हा धिक् हा धिक् यथा भणत्येषा तथा मन्ये देव एवैष कोऽपीति ।

दमयन्ती— ( सोद्वेगम् ) अवि फलिदो अज्ज सुदो वुत्तंतो ।

अपि फलितोऽद्य श्रुतो वृत्तान्तः ।

वासन्तिका— कुतो णु खु एदं सुदं सव्वं सच्चंति ।

कुतो नु खल्वेतच्छ्रुतं सर्वं सत्यमिति ।

दमयन्ती— ण खु तह भणामि । इअं खु सुणीअदि गरिट्ठगोट्ठीसु ।

फलन्ति न शुभा वाचः प्रजानां प्रचुरा अपि ।

प्रवृत्तमात्रा अपि ताः फलन्त्येव शुभेतराः ॥ ३ ॥

देवो एव्व सो तत्तवि । ( इत्यर्धोक्ते ) सारंगिए केत्तिआइं तस्स णअणाइम् ।

न खलु तथा भणामि । इदं खलु श्रूयते गरिष्ठगोष्ठीषु । देव एव सः तत्रापि । सारङ्गिके कियन्ति तस्य नयनानि ।

सारङ्गिका— ( सकोपम् ) तुमं भण माणुसाणं केत्तिआ पादा केत्तिआ करा एन्ति ।

त्वं भण मानुषाणां कियन्तः पादाः कियन्तः करा इति ।

दमयन्ती— ण सो सहस्सलोअणो अणुअरो तस्स विस्सावसू एव्व सो, जो तेण पट्ठिदेण सह पट्ठिदोत्ति सुणीअदि । हद्धि हद्धि, सक्को एव्व मं पत्थेदि । कुदो मे तस्सिं जणे पच्चासा । ( इति रोदिति )

न स सहस्रलोचनः अनुचरस्तस्य विश्वावसुरेव सः, यः तेन प्रस्थितेन सह प्रस्थित इति श्रूयते । हा धिक् हा धिक्, शक्र एव मां प्रार्थयते । कुतो मे तस्मिन् जने प्रत्याशा ।

चन्द्रकला— हला दमअंति मा एव्वं ।

सखि दमयन्ति मैवम् ।

( पुनरुपाक्षेपं सारङ्गिकापह्नवार्थं संस्कृतमाश्रित्य )

नाहारो न च मज्जनं न च परिष्कारो न वा विभ्रमो
नालापोऽपि किमन्यदत्र न च ते चैतन्यमात्रापि वा ।
को हेतुर्न विबुध्यते न जहति प्राणास्त्वदीयं वपुः
स्वात्मद्रोहिणि किं न्वितोऽपि परतः कर्तुं त्वया रुच्यते ॥

( नेपथ्ये )

चारायण निवर्त्यन्तामनुचराः उच्यन्तां च न वयमिहस्थाः कस्यापि निवेदनीया इति ।

दमयन्ती— ( सोत्कण्ठम् ) कहिं उण सद्दो विअ ।

कुत्र पुनः शब्द इव ।

वासन्तिका— किं णु सण्णिहिदो सक्को एव्व ।

किं नु सान्निहितः शक्र एव ।

चन्द्रकला— कीरिसी दे दिट्ठी अवि ण दिट्ठाइं विकासिअकदंब-दळोपमाइं अङ्गाइं पिअसहीए । ता मण्णे सो एव्व राआ एत्थ सण्णिहिदोत्ति ।

कीदृशी ते दृष्टिः । अपि न दृष्टानि विकसितकदम्बदळोपमानि अङ्गानि प्रियसख्याः । तन्मन्ये स एव राजा अत्र सन्निहित इति ।

दमयन्ती— ( सलज्जास्मितम् ) जाणासि पिअंवदे वावण्णं वि जणं जीवावेदुं । ( स्वगतम् ) सच्चं वि णाम जादु चंदकळाए वअणं भवे । सव्वहा इमाए ण सण्णिहादव्वम् । होदु एव्वं दाव । ( प्रकाशम् ) सारंगिए णिवेदेहि भअवदीए एत्थ वअं संणिहिदेत्ति ।

जानासि प्रियंवदे व्यापन्नमपि जनं जीवयितुं, सत्यमपि नाम जातु चन्द्रकलाया वचनं भवेत् । सर्वथा अनया न सन्निधातव्यं, भवत्वेवं तावत्, सारङ्गिके निवेदय भगवत्यै अत्र वयं सन्निहिता इति ।

सारङ्गिका— जं आणवेदि भट्टिणी । ( इति निष्क्रान्ता )

यदाज्ञापयति भट्टिनी ।

( पुनर्नेपथ्ये )

भो वअस्स इदो इदो एदु भवं ।

भो वयस्य इत इत एतु भवान् ।

चन्द्रकला— ळदाघरे एत्थ दे किं वि अच्चरिअं दंसेमि ।

लतागृहेऽत्र ते किमप्याश्चर्यं दर्शयामि ।

दमयन्ती— चन्दकळे पुनो वि सद्दो विअ । पेक्ख दाव परिदो वि ।

चन्द्रकले पुनरपि शब्द इव । प्रेक्षस्व तावत्परितोऽपि ।

चन्द्रकला— ( परिक्रम्यावलोक्य ) अयि संकासीले ण को वि एत्थ ।

अयि शङ्काशीले न कोऽप्यत्र ।

( ततः प्रविशति विटपान्तरितस्समदनो राजा विदूषकश्च )

राजा— किमत्राश्चर्यम् ।

विदूषकः— अग्गदो पेक्ख । अग्रतः प्रेक्षस्व ।

राजा— ( अग्रतो विलोक्य साश्चर्यं )

दीनां दृष्टिमजस्रवाष्पपतनोच्छूनां दिशन्ती पदे
क्षामं व्याकुलितालकं च दधती भूयः कपोलं करे ।
श्वासेन [1]स्खलितान्तरेण कुचयोरुत्कम्पमा[2]तन्वती
केनेयं विधिवञ्चितेन तरुणी यूना शुचं नीयते ॥ ५ ॥

पाठान्तरम् । १. स्खलितोत्तरेण. २. मामुञ्चती.

( पुनस्सहर्षम् ) चारायण दिष्ट्या वर्धसे । हन्त स्वप्नदृष्टतनुच्छायानुकारिणीवाकृतिरस्याः । अथवा किं छायानुकारिणीवेति । छायानुकारिण्येव । तथा हि ।

सा वेणी निबिडायता स च कुचाभोगः कठोरोन्नतः
तद्वक्त्रं मधुरं तदेव मदनाद्वैतं दृशोरञ्चलम् ।
किन्त्वस्यामियदेव भेदकमियं म्लाना न सा त्वीदृशी
स्वप्नः किं बहुना स एव ननु मे द्रिस्तावदावर्तते ॥

विदूषकः— सा एव्व एसा । सैवेषा ।

राजा— यदि सैवैषा शक्यं जीवितुम् । कुत एवैतत्सैवेयमिति । यथामनोरथमभिधीयताम् ।

विदूषकः— ण खु तह भणिदव्वम् । अत्थि एत्थ पमाणम् । तह हि जह सुदं पुरा चारमुहादो, जह दिट्ठं तुए सिविणए मए चित्ते वि, जह सुददिट्ठाणुवादिणी आकिदी एसा, जह उज्जाणं इदं कुण्डिणसमीवे, जह विरहपज्जूसिआ एसा, जह अ तुए एव्व भणिदं संदिट्ठं सारदाए एव्वंति, जह अ दाणिं सज्जदि दे दिट्ठी, तह मण्णे सा एव्व एसेत्ति ।

न खलु तथा भणितव्यम् । अस्त्यत्र प्रमाणम् । तथा हि यथा श्रुतं पुरा चारमुखात्, यथा दृष्टं त्वया स्वप्ने मया चित्रेऽपि, यथा श्रुतदृष्टानुवादिनी आकृतिरेषा, यथा उद्यानमेतत् कुण्डिनसमीपे, यथा विरहपर्युत्सुका एषा, यथा च त्वयैव

---

पाठान्तरम् । १.जन. २. मिदमेव.

भणितं सन्दिष्टं शारदायैवमिति, यथा चेदानीं सज्जति ते दृष्टिः तथा मन्ये सैवैषेति ।

राजा— ( विहस्य ) सत्यमियानात्मनि दृढस्संवादः । परीक्ष्यमाणस्तु परिगृह्णाति शिथिलताम् । तथा हि ।

अस्तु त्वदीरितं सत्यमस्त्वन्येयं च काचन ।
बाधकं तद्विपक्षे स्यात् प्रमाणं तन्न किञ्चन ॥ ७ ॥

विदूषकः-- अदिभूमिं गदो रागो सव्वत्त संसअं संपादेदि । किं उण दे दाणिं पमाणं भवे ।

अतिभूमिं गतो रागः सर्वत्र संशयं सम्पादयति । किं पुनस्ते इदानीं प्रमाणं भवेत् ।

राजा— अस्त्वेवं अस्या विस्रम्भजल्पितैरवधारयामस्तत्त्वम् ।

( इति निभृतौ तिष्ठतः )

दमयन्ती— दुल्लहमणोरहाभिणिविट्ठा खु अहं आआसआरिणी तुह्माणं संवुत्ता । कहिं णिसहा कहिं विदब्भा सव्वहा मोहा एव्व मे मणोरहा ।

दुर्लभमनोरथाभिनिविष्टा खल्वहं आयासकारिणी युष्माकं संवृत्ता । कुत्र निषधाः, कुत्र विदर्भाः सर्वथा मोहा एव मे मनोरथाः ।

विदूषकः— सुदं सोदव्वम् । किं एद्ध वि दे अत्थि संका ।

श्रुतं श्रोतव्यम् । किमत्रापि तेऽस्ति शङ्का ।

राजा— संवदतीव चिन्ता । श्रोष्यावः शेषमपि ।

चन्द्रकला— ( संस्कृतमाश्रित्य )

घटयितुमथ व्याहन्तुं वा सुरैरपि काङ्क्षितं
प्रभवति यदेवैकं वश्यान्वयव्यतिरेकि च ।
अनुगुणमभूदस्मिन्नर्थे तदेव मनो विधेः
इति च विदती कस्मादित्थं विषीदसि कातरे ॥ ८ ॥

मा च नामास्तु मनस्तथाविधं विधेः । अपि ते नालमनुग्रहः सरस्वत्याः ।

राजा— सखे सत्यवागसि यदस्मिन्कर्मणि साचिव्यमपि सरस्वत्याश्श्रूयते । हन्त दुर्ललितं दैवमतिक्रमितुं न शक्यते । तथा हि ।

भीमो गुरुः प्रियसखः प्रतिभूश्च वाणी
प्राप्ता वयं परिचितं हृदयं च तस्याः ।
एवंप्रकारमधुनापि मनो मदीयं
आस्तामिदं कथमसावपि खेदमेति ॥ ९ ॥

दमयन्ती— अळं एव्व अणुग्गहो सरस्सईए । किंदु बळवन्तस्स पत्थणोदन्तसवणेण वेवइ विअ मे हिअअम् ।

अलमेव अनुग्रहः सरस्वत्याः । किंतु वलवतः प्रार्थनोदन्तश्रवणेन वेपत इव मे हृदयम् ।

विदूषकः— को उण एणं पत्थेदि । कः पुनरेनां प्रार्थयते ।

---

पाठान्तरम् । १. तन्व्याः. २. आस्तामियं. ३. खेदमेत्य.

राजा— यस्सारमभिजानाति ।

विदूषकः— को उण बळवन्तो । कः पुनर्बलवान् ।

राजा— तमेव हि सखे विचिन्तयन्नपि न पश्यामि । ( पुनर्विचिन्त्य ) हन्त सन्दिष्टं हि पुरैव शारदया श्रेयांसि बहुविघ्नानीति। दृष्टं च तदेव दैवज्ञेनापि परिग्रहेऽस्याः प्रत्यूहा बलवन्त इति । अपि च विशिष्याप्यभिहितं तेनैव प्रार्थ्यते देवैरेषेति । प्रायेण तदेनां देवा एव प्रार्थयन्त इति मन्ये । ( इति खेदं नाटयन् ) हन्त कथममृतेनेव सिञ्चन् विधिरग्नौ निपातयति । किञ्च ममैव

स्वप्नेनाङ्कुरितः पुरा विकसितः सूक्त्या ततः पत्रिणः
शाखोद्भेदमवापितो विधिवधूसन्देशवाक्यैस्ततः ।
अन्वक्षं तु निरीक्षणादथ च यः प्राप्तः प्रसूनोद्गमं
वृत्तान्तेन मनोरथोऽयममुना कष्टं धिगुन्मूल्यते ॥ १० ॥

विदूषकः— कुदो एसो अपदे विसादो । जइ देवा पत्थअंदि एदं ता जिदं अह्मेहिं ति मन्तव्वम् । अहं खु तत्तं जणामि ण खु तुवत्तो बळवंता देवा ।

कुत एषोऽपदे विषादः । यदि देवाः प्रार्थयन्ते एतां तज्जितमस्माभिरिति मन्तव्यम् । अहं खलु तत्त्वं जानामि न खलु त्वत्तो बलवन्तो देवाः ।

वासन्तिका— हळा दमअंतिए अहं दे एत्थ उवाअं पेक्खामि ।

---

पाठान्तरम् । १. विचिन्त्यन्नपि. २. ममृतेनैव.

सखि दमयन्ति अहं तेऽत्र उपायं पश्यामि ।

दमयन्ती— ( सोत्कण्ठम् ) कहेहि कहेहि । कथय कथय ।

वासन्तिका— जाव ण सो संणिहिदो दाव सो उवगन्तव्वो । ता विसज्जेहि तस्स समीवे कं वि संदेसहारिणम् ।

यावन्न स सन्निहितः तावत्स उपगन्तव्यः । तत् विसर्जय तस्य समीपे कमपि सन्देशहारिणम् ।

दमयन्ती— सासो वि मे भअवदीणिदेसाअत्तो किं उण दूदीविसज्जणम् ।

श्वासोऽपि मे भगवतीनिदेशायत्तः, किं पुनर्दूतीविसर्जनम् ।

विदूषकः— भो वअस्स अअं एव्व दे समओ अत्ताणं दंसेदुम् ।

भो वयस्य अयमेव ते समयः आत्मानं दर्शयितुम् ।

राजा—नहि नहि । किं न श्रूयते निःश्वासोऽपि भगवतीनिदेशायत्त इति ! अतो बलवद्बुद्धिजे शारदानभ्यनुज्ञातसान्निधानमात्मानमस्यै दर्शयितुम् । आस्स्व मुहूर्तं आगच्छतु सापि ।

वासन्तिका— किं दाणिं तुए चिंतीअदि ।

किमिदानीं त्वया चिन्त्यते ।

दमयन्ती— किं विअ चिंतिस्सम् । किमिव चिन्तयिष्यामि ।

( संस्कृतमाश्रित्य )

एषोऽपि दुर्लभमनोरथसिद्धिरेवं
अङ्गेषु जीर्यतु चिरादनुरागवह्निः ।

प्राणान् स्वतो जिगमिषूनपि वा किमन्यत्
कालेनं मारहतकः कवलीकरोतु ॥ ११ ॥

( इति द्विस्त्रिरभिधाय रोदिति )

वासन्तिका— हला चन्दकळे अदिभूमिं गदो से मअणातंको । उवणेहि दाव दाणिं उसीरचंदणघणसारमुहाइं उवआरसाहणाइम् ।

सखि चन्द्रकले अतिभूमिं गतोऽस्या मदनातङ्कः । उपनय तावदिदानीं उशीरचन्दनघनसारमुखान्युपचारसाधनानि।

चन्द्रकला— ( नाट्येन सर्वमर्पयति । उभे यथोचितमुपचरतः । )

राजा— पश्य नृशंसस्य मम कृते बलवदिमामापन्नाम् । अस्याः किल

नाला नेत्रसरोजयोरिव नवं रूढा कपोलस्थले
वाष्पाम्भः[2]पतनोल्वणा शिव शिव श्यामायिता रेखिका ।
किञ्चेदं कुसुमायुधेन कुचयोरुत्तेजितानां रजो
बाणानामिव पश्यतो मलिनतां पिष्टातकं नीयते ॥ १२ ॥

( पुनस्सखेदाद्भुतं निर्वर्ण्य ) कथमस्यामपि दशायामीदृशं कामनीयकम् । तथा हि

या कान्तिः करयोर्मृणालवलयैर्नेयं मणीकङ्कणैः
यद्रूपं नलिनीदलेन कुचयोर्नेदं धृते कञ्चुके ।
यद्वाष्पोद्गमरेखया नयनयोस्तन्नाञ्जने सौभगं
यत्सत्यं [3]स्वदतेऽधुना परिचिता स्वप्नादपि प्रेयसी ॥ १३ ॥

---

पाठान्तरम् । १. सन्दावो. २. पतनोष्मणा. ३. स्वदते च या.

दमयन्ती— ( किञ्चिदक्षिणी निमील्य मदनवैक्लव्यनाटितकेन ) कहिं महीओ । अप्पेहि मे अङ्गसु सिसिरोवआरसंभारम् ।

कुत्र सख्यः । अर्पय मेऽङ्गेषु शिशिरोपचारसम्भारम् ।

सख्यौ— ( सास्रम् ) हद्धि हद्धि केत्तिओ से मअणातङ्को जेण एसा किदं त्ति ण जाणादि । ( इति पुनर्यथोचितमुपचरतः )

हा धिक् हा धिक्, कियानस्या मदनातङ्कः येनैषा कृतमपि न जानाति ।

चन्द्रकला— ( वासन्तिकां प्रति संस्कृतमाश्रित्य )

स्वेदोत्पीडः स्रुत इव दृशोरायतापाङ्गसीमा-
सञ्चारेण श्रमतरळयोस्स्यन्दते वाष्पपूरः ।

अपि च ।

चेतस्स्थायि[1]प्रियतमगुरु[2]श्वासमालानुबन्धात्
मन्ये जाताः [3]श्वसनमरुतो मांसलाः कोमलाङ्ग्याः ॥ १४ ॥

दमयन्ती— ( मदनतापमभिनीय ) भअवं कुसुमायुह सअळलोअविलक्खणाइं दे चरिदाइं लक्खिअन्ति । इअं खु जणा जप्पंति ।

जं दुक्खं जो खु जणो अणुहोदि ण तं परस्स सो कुणइ ।
संदावेसि कुदो मं संतत्तो संभुळोअणेण तुमम् ॥ १५ ॥

( पुनस्सास्रं ) को णु खु तुमं णिवारेदि । अवणेहि जीविदं अज्ज एव्व जइ अवणेदव्वं ति ववसाओ । किंदु

---

पाठान्तरम् । १. चेतस्स्थायी. २. प्रियतमगुरुः प्रियतम इव. ३. श्वसितमरुतो.

एक्कवारं वि मे तस्स जणस्स मुहं दंसिअ। (इत्यर्धोक्ते मूर्च्छां नाटयति)

भगवन् कुसुमायुध सकललोकविलक्षणानि ते चरितानि लक्ष्यन्ते। इदं खलु जना जल्पन्ति।

यद्दुःखं यः खलु जनोऽनुभवति न तत्परस्य स करोति।
सन्तापयसि कुतो मां सन्तप्तः शम्भुलोचनेन त्वम्॥ १५॥

को नु खलु त्वां निवारयति। अपनय जीवितमद्यैव यद्यपनेतव्यमिति व्यवसायः। किंतु एकवारमपि मे तस्य जनस्य मुखं दर्शयित्वा।

विदूषकः— हद्धि हद्धि, कहं सासो वि से ण दीसइ, पेक्खदु भवम्।

हा धिक्, हा धिक्, कथं श्वासोऽप्यस्याः न दृश्यते, पश्यतु भवान्।

राजा— (साश्रुगद्गदम्) पश्यामि सखे पश्यामि। द्रष्टुमेव हि दुर्विपाकमीदृशं सृष्टो नलो विधिना। पश्य, पश्य।

यामेतां दधतीं दशामपि शिला शक्नोति नालोकितुं
यां विध्यन्मदनोऽपि साश्रुनयनं व्यावर्तयेदाननम्।
तामेकस्त्वहमेव वज्रहृदयश्शक्तश्चिरं वीक्षितुं
क्रूरोऽसाविति जानतैव विधिना नन्वास्मि सन्दर्शितः॥ १६॥

भवतु यथातथा वा। उपसर्पामस्तावदधुनैव। (इति गन्तुमिच्छति)

सख्यौ— (ससंभ्रमम्) हला दमअंति समस्ससिहि समस्ससिहि।

( इति मुखे वीजयतः )

सखि दमयन्ति समाश्वसिहि समाश्वसिहि ।

दमयन्ती— ( आश्वस्य ) किं चिरं णाम एव्वं संसइदजीविदं दुळ्ळहमणोरहाहिणिविट्ठं च मं जाणिअ तुह्मेहिं वि अप्पा आआसीअदि ।

किं चिरं नामैवं संशयितजीवितां दुर्लभमनोरथाभिनिविष्टां च मां ज्ञात्वा युष्माभिरप्यात्मा आयास्यते ।

( नेपथ्ये )

सखि सावित्रि अपीदानीमत्र सन्निहितो वत्सो भवेत् ।

दमयन्ती— ( ससंभ्रमम् ) सहिओ सद्दो विअ भअवदीए सुणीअदि । ता अवणेहि दाणिं अङ्गेसु मे मिणाळवळआइं नाळिनीदळाइं अ ।

सख्यः शब्द इव भगवत्याः श्रूयते । तदपनयेदानीं अङ्गेषु मे मृणालवलयानि नलिनीदलानि च ।

( पुनर्नेपथ्ये )

कथं न वत्सात्र दमयन्ती ।

दमयन्ती— हळा चन्दकळे पुणो वि सद्दो इदोमुहो संणिहिदोअ ॥ ता मण्णे मं एव्व अण्णेसन्ती भअवदी इदो एव्व आअच्छदित्ति । अह्मेहिं वि विणीदवेसाइं अग्गदो एव्व देवीए गंतव्वम् । ( इति यथानिर्दिष्टमप्रतस्सर्वाः परिक्रामन्ति )

सखि चन्द्रकले पुनरपि शब्दः इतोमुखः सन्निहितश्च । तन्मन्ये मामेवान्वेषयन्ती भगवती इत एव आगच्छतीति ।

अस्माभिरपि विनीतवेषाभिरग्रत एव देव्या गन्तव्यम् ।

राजा— चारायण अद्य खलु द्रष्टव्या साक्षादेव भगवती । यत्स-
त्यमात्मैकोपगम्यमनुभवामि महान्तमानन्दम् ।

( ततः प्रविशति सरस्वती सावित्री च )

सावित्री— हन्त कथमलिप्तापि सुखासुखैरालिप्यसे बलवदमुना
भैमीपरिणयव्यसनेन ।

सरस्वती— ( विहस्य ) अस्ति च मे वक्ष्यत्येदमित्यपत्रपापि ।
अथापि संमोहितेव मोहनचूर्णेन किमप्यात्मनैवात्र सज्यामि ।
अतः खलु मदीयमेव सान्निध्यमभिलष्य तपस्यतो भीमस्य
मनोरथपूरणमपदिश्यानुज्ञातकल्पापि भगवता स्वयमस्मि
सान्निहिता । तदनुगुणं च ।

[1]सन्त्वज्ञाः सन्तु बुधास्सन्तु पुमांसस्स्त्रियश्च वा सन्तु ।
[2]स स रसिकः कविरधुना जज्ञे यो यो जनो विदर्भेषु ॥

सावित्री— प्रागेव खलु ते विदर्भा इत्येव प्रकृष्टमुत्कण्ठते हृदयम् ।
किं पुनरनुमतताया इव भगवतापि । यत्र सा वैदर्भी रीतिः ।

आदिः स्वादुषु या परा कवयतां काष्ठा यदारोहणे
या ते निःश्वसितं नवापि च रसा यत्र स्वदन्तेतराम् ।
पाञ्चालीति परम्परापरिचितो वादः कवीनां परं
वैदर्भी यदि सैव वाचि किमितः स्वर्गेऽपवर्गेऽपि वा ॥

सरस्वती— किं मया सन्निहितया यद्यापि न निर्व्यूढं प्रस्तुतम् ।

---

पाठान्तरम् । १. सर्वज्ञाः. २ स्वारसिकः.

सावित्री— सन्निहितेऽपि कीदृशी चिन्ता ।

सरस्वती— यावदत्र वत्सो न सन्निहितः तावदहं न प्रत्येमि सन्निहितं कार्यमिति । यदैव स्वप्नदर्शनाभिज्ञानसूचनपुरस्सरमुपक्षिप्य भैमीवृत्तान्तमुपलक्षितो मया नैषध इत्यस्मदनुप्रहितेन हंसेन निवेदितं तदाप्रभृति किञ्चिदुपजातकौतुका आयासयाम्येवमात्मानम् । [1]प्रकृतिस्थस्य विजिगीषोर्गभीरतया स्वायत्तकामतया च परिशङ्कमानया रणरणकेनैव मया निद्रापि न लब्धा । अनेनैकेन परमाश्वसिमि किञ्चित् ।

तास्ता [2]नूतनशिक्षितालसपरिक्षेपाः कटाक्षोर्मयः
ते ते वा मदनास्त्रजर्जरजगज्जीवातवो विभ्रमाः ।
वत्सायाः यदि वा न वक्रमधुरं तत्तद्गिरां कौशलं
कुत्रामी विषया विपा[3]कविरसाः क्वायं गभीरो नलः ॥

सावित्री— [4]दिष्ट्या ते न चिन्तनीयो विदर्भपतिः ।

सरस्वती— सखि किमुच्यते न चिन्तनीय इति । दूरे हि वाङ्मनसयोर्दुष्करमन्यैः मयि भक्तिगौरवं भीमस्य सन्निहितायां च मयि प्रणिपत्य साम्रगद्गदमित्थमभिहितं तेन ।

यन्मे राज्यं यद्बलं यश्च कोशो
ये च प्राणा ये सुता ये च दाराः ।
सर्वत्रास्मिन् संप्रति त्वं प्रमाणं
विक्रीते वा देवि विश्राणिते वा ॥ २० ॥ इति ।

पाठान्तरम् । १. प्राकृतस्तस्य. २. नर्तन. ३. मन्थर. ४. मधुराः.

अथवा किमिदमद्भुतमित्युद्घुष्यते। अनुगुणमेव किलेदमखिलराजकमूर्धन्यस्य विदितवेदितव्यस्य शिष्यस्य च मयि भूयसीभक्तिकस्य तस्य राजर्षेः अपत्यानि तस्य दाराः परिच्छदाश्च कथमस्मासु भक्तिमनतिशयामनुबध्नन्ति, तेषु च वत्सा दमयन्ती। तथा हि

श्रुत्वोत्तिष्ठति दूरतो मम गिरं नास्ते बलादासिता
गच्छन्तीमनुयाति मामथ पुनः प्रत्युद्व्रजत्यायतीम्।
आस्तां भक्तिरियं विदर्भदुहितुः प्रेमापि कोटिं परां
आरूढं मयि यत्सखीष्विव परं तन्मेऽद्य चित्रीयते॥

(इति परिक्रम्य अग्रतोऽवलोक्य सहर्षम्) अग्रत एव चन्द्रकलावासन्तिकाभ्यामनुगम्यमाना वत्सा मामितः प्रत्युद्गता। (पुनर्निरूप्य सखेदं) हन्तेयमसन्निधानेन मे बलवदिव रुदितवती। तथा हि

उच्छूने मसृणे च बाष्पसलिलक्लेदेन यत्पक्ष्मणी
रक्तं यच्च कनिष्ठिकानखमुखोल्लेखादिवाधस्तयोः।
उच्छ्वासिस्फुरितोत्तरं यदपि वा नासाग्रमापाटलं
वत्सां नातिचिरप्रशान्तरुदितां सर्वं तदाख्याति नः॥२२॥

दमयन्ती— (उपसृत्य) भअवदि वन्दामि। भगवति वन्दे।

सरस्वती— अचिरादेव त्वमभिमतं भर्तारं लभस्व, एहि परिष्वजस्व माम्। (इति सस्नेहास्रं परिष्वज्य) अहह कियानङ्गेषु

---

पाठान्तरम्। १. भूयिष्ठ.

तापोऽस्याः । सखि कदा पुनरिमां शान्तखेदां द्रक्ष्यामि ।

सावित्री— यदि तवास्यामियाननुग्रहः शान्त एव खेदोऽस्याः ।

सरस्वती— विश्वसिमि किञ्चिदेकमिदम् । विश्वमातुश्चरणारविन्द-वन्दनमेव विनेष्यति खेदमस्या इति । तदेहि भगवत्या एव पादमूलमुपसर्पामः । ( इति सर्वाः परिक्रामन्ति )

राजा— सखे निष्क्रान्तः कन्यावर्गः । तदावाभ्यामपि गूढाभ्यामात्म-सन्दर्शनावसरप्रतीक्षणाय तत्र गन्तव्यं यत्र भैमी भगवती च । ( इत्युभौ परिक्रामतः )

सरस्वती— ( परिक्रम्याग्रतोऽवलोक्य शिरस्यञ्जलिं बद्ध्वा ) इदमेव तदायतनं यत्र भगवती जगज्जननी । ( इत्युपसृत्य )

सत्यानन्दचिदात्मकं समयिभिर्ब्रह्मेति या गीयत
कौलैराहतविग्रहा परशिवाङ्कस्थेति या स्तूयते ।
नित्यैका जगतां प्रसूरिति च या तैरुत्तरैर्घुष्यते
प्रत्यक्षं परिदृश्यते भगवती सैवात्र धन्यैर्जनैः ॥ २३ ॥

( पुनस्साञ्जगद्गदम् )

क्व नु ध्यानं मातः क्व नु तव सपर्यापरिचयः
क्व वा नानाहोमः क्व नु विविधमुद्राविरचना ।
क्व नु न्यासव्यूहः क्व नु मनुसमाम्रेडनमिति
प्रपद्ये त्वामेकां भुवनजननीं भक्तिसुलभाम् ॥ २४ ॥

( इति सावित्र्या सह प्रणम्य ) वत्से इतस्तावत् ।

दमयन्ती— ( उपसर्पति )

राजा— ( साश्चर्यमग्रतो निर्वर्ण्य ) वयस्य दृश्यतामनेन विटपान्तरेण देवी शारदा, सम्पाद्यतां साफल्यं चक्षुषोः।

निश्शङ्का ननु ये नृपा इव जनानाज्ञापयन्ति स्वयं
मित्राणीव हितानि चाभिदधते माध्यस्थ्यमालम्ब्य ये।
आलापा इव सुभ्रुवां सरसतामापाद्य धिन्वन्ति ये
शब्दास्ते निखिलाश्च पश्य भुवने यस्या विभूतेः कणाः॥

सा किल दूरत एव साक्षात्कृतब्रह्मणामपि योगिनां, किमुत मादृशाम्।

विदूषकः— एसा वि देवी कहं गौरीए पणमदि।

एषापि देवी कथं गौर्याः प्रणमति।

राजा— ( विहस्य ) अतिशयितकारणत्रयशक्तिसाम्राज्यमाधिराज्यं हि महाराज्ञ्याः।

सरस्वती— ( दमयन्तीं हस्ते गृहीत्वा ) प्रणम्यतां वत्से मनोरथमभिप्रार्थ्य भगवती पराशक्तिः।

दमयन्ती— ( स्वगतम् ) को उण मे अवरो मणोरहो एक्कवार वि तं जणं केवळं वा पेक्खिस्सम्। ( प्रकाशम् ) तुह एव्व दया णिच्चा होदु ( इति प्रणमति )

कः पुनर्मेऽपरो मनोरथः एकवारमपि तं जनं केवलं वा प्रेक्षिष्ये। तवैव दया नित्या भवतु।

सावित्री— ( सरस्वतीं प्रति ) साधु वत्सया प्रार्थितम्। सा किल

सकलमनोरथानां संक्षेपतः प्रार्थना ।

राजा— पश्यतु वयस्यः प्रणमन्तीं दमयन्तीम् ।

जानुस्पृष्टमहीतलं नतशिरस्सीमन्तरेखापदं
भ्रश्यद्रत्नललन्तिकं परिगलत्संव्यानदृश्यस्तनम् ।
किञ्चित्कुञ्चितपाणिसक्तनिटिलं गौरीं नमस्कुर्वती
संक्षिप्तेव पताकिका रतिपतेरेषा समालक्ष्यते ॥ २६ ॥

विदूषकः— किं[3] तुए विलम्बिअदि । तुह वि मणोरहसिद्धीए कालणं एदाए पसादो । इअं खु मए महंताणं मुहादो गहिदं

किं त्वया विलम्ब्यते तवापि मनोरथसिद्धेः कारणमेतस्याः प्रसादः । इदं खलु मया महतां मुखतो गृहीतम् ।

( संस्कृतमाश्रित्य )

कर्णाभ्यर्णनिविष्टमुष्टिमुकुलव्याकृष्टमौर्वीलतां
तिष्ठन्तीमवकुञ्च्य सव्यचरणं किञ्चिद्विनम्याननम् ।
ये ध्यायन्ति जना मनागपि शिवां कान्ताः स्मरान्धाः स्वयं
मुह्यन्ति प्रलपन्ति तान् प्रति मुहुर्ध्यायन्ति गायन्ति च ॥

ता पुढमं एव्व अणुरत्ताए वि एदाए पुणो वि दिढतरं रागं संपादेदुं एव्वंरूपं गौरीं चिंदिअ इह ट्ठिदो एव्व भवं पणमदु ।

तत्प्रथममेव अनुरक्ताया अप्येतस्याः पुनरपि दृढतरं रागं सम्पादयितुं एवंरूपां गौरीं चिन्तयित्वा इह स्थित एव भवान् प्रणमतु ।

---

पाठान्तरम् । १. द्रत्नललन्तिकं २. दृष्टस्तनं. ३. कीस तुए विलंबीअदि ।

राजा— ( विहस्य ) फलराजमप्यपवर्गं तृणमिव पश्यतो भगवती-
प्रसादस्य फलं किमेतत् । कथं वा पुनरर्थ्यतामपि नाम
कार्यमेतदतिनीचमुद्दिश्य सैव [1]मया परदेवता । आदिष्टं हि
तयैव पौरुषं विग्रहमनुगृह्णन्त्या काममुत्सृज्यैव कर्तव्यमुपा-
सनमिति भक्तिशालिने पार्थाय ।

यज्जुहोषि यदश्नासि यत्करोषि ददासि यत् ।
यत्तपस्यासि कौन्तेय तत्कुरुष्व मदर्पणम् ॥ २८ ॥

दद्यां रत्नसुवर्णदन्तितुरगप्रायां रमामित्यसौ
आस्तां वञ्चनचातुरी दिशसि चेद्देहीदमेकं वृणे ।
आशास्यं हरिशङ्करादिभिरनाहार्यं वराकैः परैः
अप्राप्यं तपसापि तावकदयासाम्राज्यसिंहासनम् ॥ २९ ॥

( इति चक्षुषी निमील्याञ्जलिं बध्नाति )

सरस्वती— सखि सावित्रि परिश्रान्ता वत्सा । [2]परुषश्चातपो रवेः ।
तदत्रैव सालप्रच्छाये मुहूर्तमास्महे ।

सावित्री— उचितमेवेदम् । ( इति दमयन्तीं हस्ते गृहीत्वा सह सखी-
भ्यामन्यत्र परिक्रामति )

सावित्री— ( सानुध्यानम् ) ।

अपाङ्गरिङ्खत्[3]करुणातरङ्गं
अनुक्षणस्मेरमुखारविन्दम् ।

---

पाठान्तरम् । १. माया. २. परुषश्चायमातपवंगः ३. करुणान्तरङ्ग

आपीनवक्षोरुहलम्बहारं[1]
आलोकये धाम पुनः कदाहम् ॥ ३० ॥
( इति वदन्ती परिक्रामति )

राजा— ( चक्षुषी उन्मील्य ) कुत्र भगवती ।

विदूषकः— ( अन्यतो दर्शयन् ) एत्थ गदा । अत्र गता ।

राजा— तदेह्यावामपि तत्रैव गच्छावः । ( इत्युभौ परिक्रामतः )

( नेपथ्ये कलकलः )

राजा— चारायण कलकल इव श्रूयते । प्रायेण मामन्विच्छन्तः परापतन्ति मम सैनिका इति मन्ये । तद्गच्छतु भवान् तान्निवारयितुम् ।

विदूषकः— जं आणवेदि वअस्सो । ( इति निष्क्रान्तो विदूषकः ) यदाज्ञापयति वयस्यः ।

सरस्वती— सखि सावित्रि विचीयतां सान्निहितः कुत्र वत्स इति ।

राजा— ( सहर्षम् ) अये विचिनोति मामद्य भगवती । तदयमेव समय आत्मानं दर्शयितुम् । ( इत्यग्रतः परिक्रामति )

सरस्वती— ( निर्वर्ण्य स्वगतम् ) कः पुनरयं महापुरुषः । ( विचिन्त्य सहर्षम् ) जाने वत्स एवायं नैषधः । ( इत्युत्तिष्ठति )

राजा— आस्यतां आस्यतां अपचारः अपचारः । ( इति त्वरितपदं परिक्रम्य ) अम्ब वैरसेनिर्नलोऽभिवादयते ।

सरस्वती— दिष्ट्या कुशलिनं त्वां दीर्घायुषं पश्यामि । ( इत्युत्था-

---
पाठान्तरम् । १. लम्बि.

च्य दृढमालिङ्गति )

सख्यौ— जुत्तो खु पिअसहिए एदस्सिं महापुरिसे ईरिसो अभि-णिवेसो ।

युक्तः खलु प्रियसख्याः एतस्मिन् महापुरुषे ईदृशोऽभिनि-वेशः ।

दमयन्ती—( निर्वर्ण्य दीर्घमाधिकं च निःश्वस्य स्वगतम् ) अमोघदसणा खु कुळदेवता जाए पसादेण अहं अज्ज दिट्ठवदी एदं महापु-रुसम् ।

अमोघदर्शना खलु कुलदेवता यस्याः प्रसादेन अहमद्य दृ-ष्टवती एतं महापुरुषम् ।

राजा—( सावित्रीमुपसृत्य ) भगवत्यभिवादये ।

सावित्री— फलतु ते मनोरथः प्रसादेन मे प्रियसख्याः ।

राजा—( सलज्जन्तिष्ठति ) ।

सरस्वती— सखि दृष्टा मयि भक्तिर्वत्सस्य ।

राजा— किमाज्ञाप्यते भक्तिरिति । ननु युष्माभिरेव मयि नि-र्व्याजमनुगृहीतम् । तथा हि

यः पुष्पापचितौ द्वितीयकुसुमग्राहादपि क्लिश्यते
यं चासावुपजीवति त्रिजगती चन्द्रं चकोरीव वा ।
पाणिर्देवि स एव ते मम कृते यत्पत्रिकालेखन-
व्यापारे विनियोजितस्त्रिभुवने मत्तोऽपरः कोऽधिकः ॥

---

पाठान्तरम् । १. दीर्घमालिङ्गति.

सरस्वती— एहि वत्स इत आस्वहे । ( इति राज्ञा सह दमयन्तीसमीपे उपविशति )

राजा— ( कटाक्षेण नायिकां पश्यन्, स्वगतम् ) अधुना पुनरतिसन्निधानेन स्पष्टतरमालक्ष्यते रूपसर्वस्वमस्याः ।

व्यक्तं रक्ततया मृदुत्वमधरे व्यङ्ग्यं यदास्वादनात्
दृष्टा पीनतया कुचे कठिनता दृश्या विमर्देन या ।
ज्ञातः स्निग्धतया कचे परिमलो ज्ञेयस्समाघ्राय यो
दृष्टिः किं बहुना किमन्यकरणैः स्वे स्वेऽभिषिक्ता पदे ॥

दमयन्ती— ( राजानं निर्वर्ण्य आत्मगतम् ) किं णु खु सोम्मदंसणस्स एदस्स दंसणेण संमूढवेदणा अत्तणो वि ण प्पहवामि । किं नु खलु सौम्यदर्शनस्य एतस्य दर्शनेन सम्मूढवेदना आत्मनोऽपि न प्रभवामि ।

सावित्री— सखि शारदे, भगवत्यास्सन्निधानेन परिहृतताम्बूलसेवना बलवदभिभूयते वत्सा जृम्भिकया । तदनुमन्यतामिमां भगवती ताम्बूलपरिग्रहाय ।

राजा— ( नायिकामपाङ्गयन् ) ताम्बूलपरिहरणानहीं तन्वीयम् ।

उत्पीडस्तिमिताश्रु यत्किल मनागुच्छूनदन्तच्छदं
प्रायस्तत्सहनाक्षमापरिणमत्पाटल्यवक्त्राम्बुजम् ।
कान्तिं हन्त बिभर्त्यसौ सरलितग्रीवासमुल्लासित-
स्तोकोन्नम्रपयोधरं प्रतिमुहुर्जृम्भासु बिम्बाधरा ॥ ३३ ॥

---

पाठान्तरम् । १. ममान्य. २. भवत्याः. ३. गुन्मुद. ४. क्रान्तिं ५. तरलित

सरस्वती— ( क्षणं विचिन्त्य ) वत्से परिगृह्यतां वीटिका ।

सख्यौ— ( निर्वर्ण्य ) वासन्तिके वितर वीटिकां वत्सायै ।

वासन्तिका— ( नाट्येनार्पयति )

दमयन्ती— ( गृहीत्वा सलज्जं तिष्ठति )

सरस्वती— आगतं सत्कार्यमप्यतिथिमनादृत्य न युक्तमात्मनैव किञ्चिदपि सेवितुम् । तदयमेव प्रथमं संभाव्यताम् ।

दमयन्ती—(स्वगतम्) भअवदि लज्जेमि पसीददु होदि । परित्ता-अहि किं वि मुहुत्तमेत्तअं धीरत्तणप्पदाणेण। अज्ज वि तुह पसादेण तु दंत्तदंसणं एदं संभावेमि । ( प्रकाशम् लज्जां नाटयन्ती सरस्वत्या हस्तेऽर्पयति )

भगवति लज्जे, प्रसीदतु भवती, परित्रायस्व किमपि मुहूर्तमात्रकं धीरत्वप्रदानेन, अद्यापि तव प्रसादेन (?) दर्शनमेतत्सम्भावयामि ।

सरस्वती— ( सपरिहासम् ) का वयमन्यदीयमन्यस्मै दातुम् । त्वयैव संभाव्यतामुपस्थितोऽयमातिथिः ।

दमयन्ती— ( सलज्जा निभृतं तिष्ठति )

सरस्वती— ( दमयन्त्याः करं गृहीत्वा राज्ञो हस्तेऽर्पयति )

राजा— ( स्वगतम् ) किं नाम नोपकृतमेतत्प्रसङ्गसंपादयित्र्या सावित्र्या ।

दमयन्ती— ( आत्मगतम् ) णं पुढमं एव्व अहं एदस्स हत्थे स-

---

पाठान्तरम् । १. तुलग्गदद्ध. तुलग्गदन्ध. तुलग्गलग्ग. २. तां त्वामुप.

मप्पिदा मअणेण। दाणिं उण पच्चक्खं तह करेइ मं भअवदी। (प्रकाशम् लज्जया सखीमुखासक्तदृष्टिरपर्यति)

ननु प्रथममेवाहं एतस्य हस्ते समर्पिता मदनेन। इदानीं पुनः प्रत्यक्षं तथा करोति मां भगवती।

सरस्वती— गृह्यतां वत्सेन।

राजा— युष्मत्प्रसाद इति गृह्यते।

सरस्वती— (विहस्य) अस्त्विदमेवम्। अन्यदपि गृह्यतामस्मत्प्रसाद इति वत्सेन।

राजा— (स्वगतम्) अत्र किमाज्ञापनव्यसनेन भगवत्याः यत्कृते जनोऽयमेवमर्थ्यते।[1]

सावित्री— पाणिव्यतिकरोऽयं वत्सयोः पूर्वरङ्गः खलु सन्निहितस्य पाणिग्रहणस्य।

सख्यौ— (सहर्षम्) गणइ देवि साविति तस्स को जुत्तो समओत्ति तुह्माणं चित्ते पडिहाइ।

गणय देवि सावित्रि तस्य को युक्तः समय इति युष्माकं चित्ते प्रतिभाति।

सरस्वती— (सावित्रीं प्रति अपवार्य) कस्समय इति मन्यसे।

सावित्री— क इतोऽपि।

दमयन्ती— (सव्रीडकोपम् सख्यावपाङ्गेन पश्यति)

---

पाठान्तरम्। १. मेवं क्रियते.

राजा—

भारत्यां सुधयेव कुत्राचिदियं भक्त्या परिक्षालिता
काश्मीरैरिव चर्चिताथ परतः कान्तानुरागेण च ।
पङ्कैः क्वापि कलङ्कितेव च परानुप्रार्थनाशङ्कया
नैकां रीतिमिहाधिरोहति मनोवृत्तिः कथं मामिका ॥२४॥

सरस्वती— अस्ति नः किञ्चित्कर्तव्यम्[1]। तदत्रैव वत्साभ्यामास्यताम् । ( इति सावित्र्या सह गन्तुमिच्छति )

( नेपथ्ये शब्दः )

राजा— ( कर्णं दत्त्वा ) परिजनश्चारायणो नाम[3] संप्रत्येव प्रस्थितः सैनिकान्निवारयितुम् । तस्यायं शब्दः ।

( प्रविश्य )

विदूषकः— ( सरस्वतीं प्रणम्य राजानं प्रति ) विस्सावसुदुदीओ इंदो तुमं अण्णेसंतो इदो आअच्छदि ।

विश्वावसुद्वितीयः इन्द्रः त्वामन्वेषयन् इत आगच्छति ।

राजा— प्रियं नः । कथं भगवानेव पाकशासनः काङ्क्षति मां दर्शनानुग्रहेण पावयितुम् ।

दमयन्ती— ( स्वगतम् सविषादम् ) कहं महाराओ एव्वं भणइ । किं ण जाणादि तस्स वुत्तंतं । उद जाणंतो वि मम मंदमाअणीए अदिट्ठेण तं एव्वं बहुमण्णेदि ।

---

पाठान्तरम् । १. तत्र विदिता. २. आयतते इत्यधिकः पाठः.
३. भगवतीतनयस्य इत्यधिकः पाठः ।

कथं महाराजः एवं भणति । किन्न जानाति तस्य वृत्तान्तं । उत जानन्नपि मम मन्दभाग्यायाः अदृष्टेन तमेवं बहुमन्यते ।

सरस्वती— ( सावित्रीं प्रत्यपवार्य ) सखि मन्ये वत्सो न जानाति वासवोदन्तं येनैवमभिधत्ते । तदस्माभिस्सर्वथैव न दर्शयितव्या [1]तस्मै दमयन्ती । ( प्रकाशम् ) वत्सोऽप्यद्य वासवेन सं[2]भोष्य प्रतिनिवर्तमानो भीमान्तःपुरं मामुपतिष्ठताम् । ( इत्युत्थाय ) साधय वत्स, साधयामो वयम् । ( इति सर्वाभिः परिक्रामति )

राजा— ( सरस्वत्याः पादावुपसंगृह्य ) भवत्या एवादेश इति परित्यज्यसे पुत्रेण । ( इति परिक्रामन्निवृत्य दमयन्तीं निर्वर्ण्य ) प्रार्थनीयोऽपि मे वासवाभिगमः परिक्लेशहेतुरासीत्, यदियं करगतैव मे गलति कला चान्द्रमसी ।

दमयन्ती— ( स्वगतम् ) अग्गदो वि गच्छन्ती [3]अवहीरामि पच्चा मअणेण । ( इति निष्क्रान्ताः सर्वे )

अग्रतोऽपि गच्छन्ती अपह्रिये पश्चात् मदनेन ।

॥ इति तृतीयोऽङ्कः ॥

---

पाठान्तरम् । १. तस्यैषा. २. संभाव्य. ३. अवहरामि.

## ॥ अथ चतुर्थोऽङ्कः ॥

( ततः प्रविशतः चन्द्रकलावासन्तिके )

चन्द्रकला— हळा वासन्तिए किं ति एआइणिं पिअसहिं परिच्चअ पट्ठिदासि ।

सखि वासन्तिके किमित्येकाकिनीं प्रियसखीं परित्यज्य प्रस्थितासि ।

वासन्तिका— ताए एव्व णिओएण । तस्या एव नियोगेन ।

चन्द्रकला— कीरिसो ताए णिओओ । कीदृशस्तस्या नियोगः ।

वासन्तिका— झत्ति पडिणिविट्टामित्ति णिग्गदा वि एव्वं किदविळंवा तुमं एव्व विआरइदव्वेति ।

झटिति प्रतिनिंवर्त इति निर्गताप्येवं कृतविळम्बा त्वमेव विचारयितव्येति ।

चन्द्रकला— कज्जेसु पविट्ठाणं कहं णु सक्कं जहाणिद्दिट्ठं आअंतुम् । तुमं भण किं करोदि णो पिअसही ।

कार्येषु प्रविष्टानां कथं नु शक्यं यथानिर्दिष्टमागन्तुम् । त्वं भण किं करोति नः प्रियसखी ।

वासन्तिका— किं विअ करिस्सदि । णिसग्गातिक्खं वि णिरंतरसंकप्पवळ्ळहसमुल्लेहणकुण्ठिदग्गं कडक्खं तुह मग्गे पादअंती चिट्ठइ दमअन्ती । को उण तस्स वुत्तंतो ।

---

पाठान्तरम् । १. जहाचिन्तिदं.

किमिव करिष्यति। निसर्गतीक्ष्णमपि निरन्तरसङ्कल्पवल्लभ-समुल्लेखनकुण्ठताग्रं कटाक्षं तव मार्गे पातयन्ती तिष्ठति दमयन्ती। कः पुनस्तस्य वृत्तान्तः।

चन्द्रकला— सो वि इदो पडिणिवुत्तो तं एव्व उज्जाणं गदुअ एक्कदो मअणेण अवरदो महेन्देण वि हिअए पीडिज्जंतो सचिंतो वट्टइ । अज्ज वि ण तेण साविदो इंदो वुत्तंतं इमम्। साविदे उण कहं होदित्ति ण जाणे ।

सोऽपि इतः प्रतिनिवृत्तस्तदेवोद्यानं गत्वा एकतो मदनेनापरतो महेन्द्रेणापि हृदये पीड्यमानः सचिन्तो वर्तते। अद्यापि न तेन श्रावित इन्द्रो वृत्तान्तमिमम्। श्राविते पुनः कथं भवतीति न जाने।

वासन्तिका— जह तह वा होदु। गमिस्साम दाव ताए समीपं। सा खु दुवेणं वि अह्माणं असंणिहाणेण बलिअं दुमिज्जइ । ( इति निष्क्रान्ते )

यथातथा वा भवतु । गमिष्यावस्तावत्तस्याः समीपम्। सा खलु द्वयोरप्यावयोरसन्निधानेन बलवद्दूयते ।

॥ प्रवेशकः ॥

( ततः प्रविशति यथानिर्दिष्टो राजा )

राजा— (सोत्कण्ठम्)

उन्मीलत्पुलकं मनागुपचितस्वेदानुविद्धोर्मिकं
किञ्चित्कम्पितकोमलाङ्गुलिदलोत्सङ्गस्खलद्वीटिकम्॥

न्यस्यन्तीं करपल्लवं करतले धन्ये ममास्मिञ्छनैः
तामेतां निमिषन्निमिषन्नपि समं वीक्षे न वीक्षे पुनः ॥

( अग्रतो निर्वर्ण्य सखेदम् ) अधुनैव कथमवतारितोऽयमध्वग-कुलापमृत्युना मधुना । अनतिवाहनीयानि खलु नाम वियोगिभिरहानि मधुमासस्य ।

चूतैरङ्कुरितं स्मितं कुरवकैरुन्मीलितं केसरैः
उद्भ्रान्तं मलयानिलैरपि पिकैरुत्कूलमुत्कूजितम् ।
किं कुर्वन्तु किमाश्रयन्तु किमिव ध्यायन्तु गायन्तु किं
प्राणैः कण्ठगतैः कियच्चिरमिव ग्लायन्तु वा जन्तवः ॥

( पुनस्सोपालम्भम् )

कामो वल्गतु नाम दग्धवपुषः कस्तस्य दण्डो नवः
चन्द्रो गर्वयतां सुधामयतया नित्योऽहमस्मीति वा ।
भ्रातः शंस वसन्त कस्त्वमनयोर्मासद्वयीमात्रम-
प्यायुः संप्रति जानतस्तव कथं पान्थेषु रूक्षं मनः ॥ ३ ॥

( स्पर्शमभिनीय ) अयमपि कथं प्रवृत्तो मारुतहतकः, य एषः

बालाभिः परिशीलितः पवन इत्याचार इत्यादृतो
मुग्धाभिर्मलयाद्रिमारुत इति प्रौढाभिरासेवितः ।
दग्धैरध्वगयौवतैरनल इत्याक्रुश्यमानः पुनः
शृङ्गारप्रथमास्पदं प्रचलति श्रीखण्डशैलानिलः ॥ ४ ॥

( पुनस्सनिर्वेदबहुमानम् )

कालं कियन्तमनयन्कठिनैस्तपोभिः
नक्तंचरेन्द्रनगरीनिलया युवानः।
जानन्ति ये न किल जात्वपि दारुणानि
गन्धाचलात्प्रचलितस्य गतागतानि ॥ ५॥

अथवा किमित्येतानुपालभे।

किं नासीदयमुत्सवाय सुरभिः किं नाभवन्मन्मथः
शृङ्गारेषु गुरुः किमेष पवनो मित्रं न मे प्रागभूत्।
अद्यैवं मधुरेऽपि वस्तुनि रसानास्वादयन्नन्यथा
रोगीवाहमनेन दग्धविधिना नीतो दशामीदृशीम् ॥ ६ ॥

( क्षणं स्तब्धं स्थित्वा, समन्तादवलोक्य, दीर्घं निःश्वस्य ) अधः पतितस्सकृदधोऽधः पतति जनः। यदिदं प्रथममीदृशं दुर्विपाकमापादयन् विधिरपहृतवानिव मनोविनोदनोपायमपि। यत्र खलु निवेद्यापि केवलं आतङ्कमान्तरमभिलषामि किञ्चिदाश्वसितुं स एव कथमभिज्ञातवृत्तान्तोऽपि चारायणाश्चिरायति। ( अग्रतो निर्वर्ण्य सहर्षं ) हन्त चिन्तितमात्र एव सन्निहितो हृदयज्ञश्चारायणः।

( प्रविश्य )

विदूषकः— विजई होहि। विजयी भव।

राजा— इत आस्यताम्।

विदूषकः— ( उपविशति )

---

पाठान्तरम्। १. प्रचलतोऽस्य.

राजा— किंनिमित्तं सखे सन्दिष्टममात्यकामन्तकेन, कीदृशं च तत्, किं च त्वया मदनुप्रहितेन तं प्रति प्रतिसन्दिष्टम् ।

विदूषकः— जाणासि तुह दाआदं पुक्खरअं ।

जानासि तव दायादं पुष्करकम् ।

राजा— ( विहस्य ) ज्ञायत एव दुरभ्यस्तधनुर्विद्यादुर्विदग्धो वटुरेषः । अतिचारितमपि तेन किञ्चिदसान्निहिता वयामिति जनपदेषु ।

विदूषकः— ण हि ण हि अदिचारिदुं उवक्कंदं ण उण अदिचरिदं । विपडिहदं तं वि अमच्चकामंतअप्पहावेण । अह वि सेणिअसंणिहाणं राआणं धंमोत्ति सेणावई चण्डसेणो पेसइदव्वो त्ति संदिट्ठं अमच्चेण । मए वि सो एव्व अणुप्पेसिदो ।

न हि न हि अतिचरितुमुपक्रान्तं न पुनरतिचारितम् । विप्रतिहतं तदप्यमात्यकामन्तकप्रभावेण । अथापि सैनिकसन्निधानं राज्ञां धर्म इति सेनापतिश्चण्डसेनः प्रेषयितव्य इति सन्दिष्टममात्येन । मयापि स एवानुप्रेषितः ।

राजा— साधु कर्तव्यमेव कृतम् । उपेक्षितश्शत्रुरल्प इत्युन्मिषति कालेन स्फुलिङ्ग इव । तत्प्रशमयितव्यस्समूलमेव जनपदं प्रविष्टमात्रैरयमस्माभिः ।

विदूषकः— किं एत्तिअस्स कोवस्स एसो विसओ ।

किं एतावतः कोपस्यैष विषयः ।

राजा— चारायण प्रशस्यमानस्त्वया बलवदिव लज्जे । यतः ।

अब्धीन्सप्त च शोषयेयमखिलान् भिन्द्यां कुलाद्रीनपि
क्रुद्धश्चेद्युधि धावयेयमपि तत्सैन्यं च दैवासुरम् ।
दुस्साधं यदितोऽपि किञ्चिदपि तत्कर्तुं क्षमे न क्षमे
पुष्पेषोर्यदनङ्गकस्य पुरतः स्थातुं मनोजन्मनः ॥ ७ ॥

विदूषकः— णं विसुमरिदम् । कहेहि कीरिसो सक्कसंवादवुत्तन्तो ।

ननु विस्मृतम् । कथय कीदृशः शक्रसंवादवृत्तान्तः ।

राजा— ( सनिर्वेदम् ) सखे कीदृगिव कथयामि । अनर्थः खलु महाननेन संवृत्तः ।

विदूषकः— ( सोद्वेगम् ) कहं विअ । कथमिव ।

राजा— श्रूयतामनुक्रमेण । विदितमेव हि भवतोऽपि यथा वयमेवोपस्थिता महेन्द्रमुपनिवेशिताश्च साभ्युत्थानमासने तेनेति ।

विदूषकः— आं वअस्स आं, ण केवलं आसणे णिवेसिदो पसंसिदो त्ति तुमं महेंदेण बहुविहेहिं वअणेहिं तदो किल किंवि तुह्माणं महाराएण रहस्से कहिदव्वं अत्थीत्ति कहिज्जमाणे विस्सावसुणा कामंतअसंदेसहरे उवट्ठिदे अह्मकेरे चारे तेण व्ववदेसेण अहं तुए विसज्जिदो ।

आं वयस्य आं, न केवलमासने निवेशितः प्रशंसितोऽसि त्वं महेन्द्रेण बहुविधैर्वचनैः । ततः किल किमपि युष्माकं महाराजेन रहस्ये कथयितव्यमस्तीति कथ्यमाने विश्वाव-

सुना कामन्तकसन्देशहरे उपस्थिते अस्मदीये चारे तेन व्यपदेशेनाहं त्वया विसर्जितः।

राजा—सम्यगनुस्मारितोऽस्मि। ततः खलु प्राभवादिवापातत: परमार्थतस्तु लज्जयैव विलम्बमाने विडौजसि सबहुमानमित्थमभिहितं विश्वावसुना। विदित एव हि विधुवंशप्रसूतेरुपकाराभिनिवेशः परमात्रे, ततः स्वजनेषु, ततस्तरां च विबुधेषु, ततस्तमां च निखिललोकगृहमेधिनि भगवति पाकशासने। तत्र च न वाचमपेक्षन्ते तव गुणाः। तथा हि।

एकैकां क्रमभाविनीमपि कलामिन्दोस्समास्वाद्य यैः
कण्ठाद्रीवितजीवितैर्निरवधिः कालः कथञ्चिज्जितः।
तैरेवोद्धुरपूरमध्वरहविःसारं प्रसादेन ते
भुञ्जानैर्दिविषद्भिरद्य जठरप्रायं वपुर्धार्यते ॥ ८ ॥

अपि च।

अस्मिन्नर्थितदायिनि त्रिजगतीदोर्गर्वसर्वङ्कषे
दोस्स्तम्भे तव संयता दृढतरज्याघातरेखाङ्किते।
व्याकृष्टापि ततस्ततो वरबलादुद्दामभिर्दानवैः
स्वच्छन्दापि निसर्गतो न चलति स्वर्लोकलक्ष्मीरियम् ॥

अलमतिप्रसङ्गप्रस्तावनयेत्यभिदधाने मयि पुनरेतदभिहितम्।

यद्गोष्ठे कलिता स्वयं सुरगवी यत्कल्पवल्ल्यश्च वा
लीलोद्यानजुषो गृहाङ्गणगतश्चिन्तामणिश्चापि यत्।

---

पाठान्तरम्। १. हविःस्फार.

संभूयापि न शक्नुवन्ति सफलीकर्तुं तदेव स्वयं
निर्वर्त्य त्रिजगद्वदान्य भवता दुस्साधमस्येप्सितम् ॥ १० ॥

इति । ततश्च मयि हन्त बहोः कालादर्थिनं नाम न कश्चिद्-पश्यम् अपि च तत्रभवन्तमेव भगवन्तमित्यन्तरानन्दमनु-भवति बहिरपि च कुर्यामिति प्रतिश्रुतवति तेनेदमन्यदेवो-पन्यस्तम् ।

विदूषकः— किं विअ । किमिव ।

राजा—

त्वदधीना भीमसुता त्वमसि च हृदयं द्वितीयममरपतेः ।
तदिह सखे घटनीया तरुणी दूतेन सा त्वयास्येति ॥ ११ ॥

विदूषकः— ( स्वगतम् ) भअवंतस्स प्पसादेण एव्वं होदु । अज्ज वि दाव जीविस्सं । जं किळ सिविणअदंसणप्पहुदि उंमत्तं विअ गहग्गहीदं विअ उल्लवन्तं विअ उंमुद्धं विअ सुण्णहिअ-अं अण्णहुण्णहा पळवन्तं अण्णगण्णं विअ चिंतअंतं एदं एक्कहिअओ विअ विसादं अहिणअंतो आसासंतो बहुवि-हेहिं वअणेहिं अहं वि रत्तिंवि अलद्धनिद्दाहारो एव्वं दूमेइ मादुणो एक्कपुत्तो अअं जणो । ( प्रकाशम् सविषादाशिरःकम्पं ) कहं विअ उवक्कंदं कहं विअ आपडिदम् । किं एत्थ तुए पडिवण्णं ।

भगवतः प्रसादेनैवं भवतु । अद्यापि तावज्जीविष्यामि ।

पाठान्तरम् । १ अणुहुंतो.

यत्किल स्वप्नदर्शनप्रभृति उन्मत्तमिव ग्रहगृहीतमिव उल्लपन्तमिव उन्मुग्धमिव शून्यहृदयं अन्यथान्यथा प्रलपन्तं अन्यदन्यदिव चिन्तयन्तमेतमेकहृदय इव विषादमभिनयन्नाश्वासयन् बहुविधैर्वचनैः अहरपि रात्रिमपि अलब्धनिद्राहारः एवं दूयते मातुरेकपुत्रोऽयं जनः। कथमिवोपक्रान्तं कथमिवापतितम्। किमत्र त्वया प्रतिपन्नम्।

राजा— (विहस्य) सखे त्वयैव दृश्यतां किमत्र नलेन प्रतिपत्तव्यम्[1]। तथा हि।

येनैवं स्वयमागतं यदि यशः किं नाम नाक्रामितं
येनैवाथ च याचितुं व्यवसितं नो वेद्मि किं दीयताम्।
किं तत्रैव हरावुदास्य शशिनः कुर्यां कलङ्कं कुले
प्राणानेव बिभर्मि निष्फलमुत स्वेनैव भैमीं त्यजन् ॥

विदूषकः— केत्तिओ दे कण्णदहीइप्पमुहवदण्णजणब्भत्थणाकुण्ठिदरसणग्गे सक्के वि बहुमाणो। ण खु एदेणात्थिदं त्ति तं रअणं हादव्वं।

कियांस्ते कर्णदधीचिप्रमुखवदान्यजनाभ्यर्थनाकुण्ठितरसनाग्रे शक्रेऽपि बहुमानः। न खल्वेतेनार्थितमिति तद्रत्नं हातव्यम्।

राजा— सत्यमेतत्। तथापि प्रतिश्रवभङ्गभीरुणा मया तथेत्येक तदभ्युपगतम्। अभिहितं च तदैव किञ्चिदिदम्।

---

पाठान्तरम्। १. प्रतिवक्तव्यं.

"दूतो [1]भवानि [2]कथयानि च तानि तानि
वाक्यानि यानि किल संवननोचितानि ।
[3]आवर्जयानि सुमुखीमपि शक्तितस्तां
वक्तुं बिभेमि तु परं घटयेत वेति ॥ १३ ॥

यतः खलु निसर्गदुर्निवाराणि निश्चितार्थानि मनांसि नाम जनानाम् । किं पुनः प्रकृतिकुटिलानि तान्येव स्त्रीणाम् । अपि च कथमुत्सहे गन्तुमर्ककरैरपि दुष्प्रवेशमन्तःपुरं विदर्भपतेः" इति । महेन्द्रस्तु ततस्समुत्थाय प्रवेक्ष्यसि भीमान्तःपुरं प्रभावेन तिरस्करिण्याः, साधयिष्यसि च दुस्साधमपि प्रतिश्रुतं इत्युक्त्वा विससर्ज ।

विदूषकः— साहु तुए अणाआसेण लद्धो बहुमाणो । हन्त भो किंति वीडिं दाऊण वीडिकक्कं गहीदं ति अत्ताणं बहुमण्णेसि ।

साधु त्वयानायासेन लब्धो बहुमानः । हन्त भोः किमिति वीटीं दत्वा वीटिकरकं गृहीतमिति आत्मानं बहुमन्यसे ।

राजा— सखे न बहुमतोऽस्मीति विकत्थे । अनर्थमेव परं तादात्विकमानुपूर्व्येण कथयामि ।

विदूषकः— कहेहि कहेहि कण्णामिअम् । किं तुए साविदा एसा इमं वुत्तन्तम् ।

कथय कथय कर्णामृतम् । किं त्वया श्राविता एषा इमं वृत्तान्तम् ।

---

पाठान्तरम् । १. भवामि. २. कथयामि. ३. आलापयामि.

राजा— न हि न हि कथमङ्गारः कर्णयोरस्या वर्षणीय इति संशयानो यावदुपसर्पामि मन्दंमन्दमन्तःपुरद्वारं, तावदभिमुखागतया सावित्र्या तिरस्करिणीच्छन्नोऽपि दृष्ट एवास्मि माहात्म्यात्।

विदूषकः— किंति ताए तहिं आअदम्।

किमिति तया तत्रागतम्।

राजा— यदैव वयं महेन्द्रेण संवदन्तस्स्थितास्तदैव चारमुखेन विदितवृत्तान्ता भगवती श्रावितवती नस्संवादमपि दमयन्तीम्। अथ च तां बलवदातङ्कितामभिलक्ष्य विदिततदीयहृदयां भगवत्येव विसृजति स्म सन्देशहारिणीं सावित्रीम्। अभिहितं चैवमनयैव।

विदूषकः— कीरिसो सन्देसो किमिओ अ।

कीदृशः सन्देशः किमीयश्च।

राजा— भगवत्या एव भैमीव्यपदेशिनः सन्देशाः इयन्त्येव च तान्यक्षराणि पुनरीदृशानि च। यथा यदैवायं जनो भवन्तमियत्के तापाय गृह[1] एव विचित्रपटेषु पितुस्समीपे लिखितमद्राक्षीत् तदाप्रभृत्येव त्वयि न्यस्तजीवनः[2] प्रभवति नात्मनोऽपि। किं बहुना।

मानद स्मरशरार्दितां चिरात्
मां यदि त्वमनुमन्यसेऽधुना।

---

पाठान्तरम्। १. अह. २. जीवितः.

ईदृशीं च यदि वावमन्यसे
सर्वथासि मम जीवितेश्वरः ॥ १४ ॥ इति ।

विदूषकः— सव्वहा जीविदेसरो तुमं ति किं कहिदं होदि।
सर्वथा जीवितेश्वरस्त्वमिति किं कथितं भवति ।

राजा— ( विहस्य ) किमेतावदपि न ज्ञायते परिग्रहे तावत्प्रकटमेव । अन्यथा पुनरवश्यंभाविनी दशमी दशेति सूचितमासीत् ।

विदूषकः— हद्धि, हद्धि, जइ एव्वं ण गंतव्वं तुए णच कत्तव्वं तस्स वि पसंजणम् ।
हा धिक् हा धिक्, यद्येवं न गन्तव्यं त्वया न च कर्तव्यं तस्यापि प्रसञ्जनम् ।

राजा— न केवलमियदेव शापितोऽस्मि स्वयं सावित्र्यापि मा भवानिदमर्थं गमत् माच भवानमुमर्थं मनसापि प्रसञ्जयदिति भगवत्या एव पादाभ्याम् ।

विदूषकः— जिदं अह्मेहिं भअवदीए एव्व उवारि णिवेसीअदु दोसो । पालीअदु अ तुए तत्तहोदी दमअंती ।
जितमस्माभिः भगवत्या एवोपरि निवेश्यतां दोषः । पाल्यतां च त्वया तत्रभवती दमयन्ती ।

राजा— सखे नाद्यापि ते परिणता बुद्धिः। येनैवमभिधत्से । यतः सत्यमप्येतदिहस्थैरस्माभिरभिधीयमानमसत्यमेव मघवतः प्रतीयेत । तथा हि ।

अर्थी यः प्रथमं विदर्भतनयामर्थ्यश्च तस्याः स्वयं
भूयः प्रस्तुतसाधनेऽनुशयितो दूत्ये नियुक्तोऽपि यः ।
ब्रूते यद्यनुपेत्य तामपि न सा संमन्यतेऽत्रेत्ययं
विश्वस्यात्क इवापरोऽपि किमुत प्रागेव यः शङ्कितः ॥

ततश्चायमेव तामभिलषन्नन्यथापि गतिं कल्पयतीति वज्रलेपायते मनसि मघवतोऽप्याशङ्का ।

विदूषकः— णं तुए वैदब्भि उपसप्पंतेण वि ताए वि मुहादो अअं एव्व संदेसो सोदव्वो । सावइदव्वो वि सो एव्व संदेसो महेंदं वि । तहिं वि तस्स संका एसेव्व। एसो उण विसेसो । उणख दाव एक्को पुडमं भंजिदो होदि । तत्तहोदीए अदिळंघिदो अहिणवो भअवदीपादाणं सावो होदि ।

ननु त्वया वैदर्भीमुपसर्पतापि तस्या अपि मुखादयमेव सन्देशः श्रोतव्यः श्रावयितव्योऽपि स एव सन्देशो महेन्द्राय तस्मिन्नपि तस्य शङ्कैव । एष पुनर्विशेषः प्रणयस्तावदेकः प्रथममेव भग्नो भवति । तत्रभवत्या अतिलङ्घितः अभिनवः भगवतीपादयोः शापो भवति ।

राजा— सखे सत्यमसि नीतिषु निष्णातः । इत्थमेव वयमपि चिन्तयन्तो विसृज्य तथेति सावित्रीमिहैव प्रतिनिवृत्ताः ।

विदूषकः— सच्चो खु जणवादो । अवस्संभावी अत्थो अणिच्छन्तस्स वि मुहादो सअं एव्व णिस्सरदित्ति जं तुमं पत्थअंतेण विस्सावसुणा भवता दुस्साधमस्येप्सितं ति कहिदम् ।

सत्यः खलु जनवादः अवश्यंभाव्यर्थोऽनिच्छतोऽपि मुखात् स्वयमेव निस्सरतीति । यत्त्वां प्रार्थयमानेन विश्वावसुना भवता दुःसाधमस्येप्सितं इति कथितम् ।

राजा— ( विहस्य ) सखे संस्कृतेऽपि प्रगल्भसे । पश्य तथैव तत्पर्यवसन्नम् ।

विदूषकः— तदो खु तुमं सक्करापाअसभोजिव्व चाराअणो अत्ताणं वि विसुमरिअ आणंदे णिमग्गोसि ।

ततः खलु त्वं शर्करापायसभोजीव चारायणः आत्मानमपि विस्मृत्य आनन्दे निमग्नोऽसि ।

राजा— ( विहस्य ) सखे सम्यगुपन्यस्तं निदर्शनम् । ( पुनर्विचिन्त्य सखेदम् ) हन्त कथमभिज्ञातहृदयोऽपि मामन्यथा संभावयसे । यतः ।

स्त्रीरत्नं प्रथमं प्रसक्तमिति वा मय्यर्थिनी सेति वा
प्रक्रान्तेऽपि दिवस्पतेः परिणये नास्थामधत्तेति वा ।
यत्सत्यं न कथञ्चिदाश्वसिति नो विस्मृत्य वा जात्वपि
प्रत्यग्रार्थिमनोरथप्रतिहतिव्रीडाविलक्षं मनः ॥ १६ ॥

किञ्च ।

अर्थी तु स्वयमागतस्त्रिजगतामेकेश्वरो वासवः
प्रार्थ्या काप्यपरैव राजदुहिता स्वेनार्थिता या परम् ।
प्राग्यद्दातृवदाश्रुतं कृपणवत्प्रत्युक्तमेवं पुनः
तच्चेत्किं न विनिर्मले विधुकुले न्यस्तः कलङ्को मया ॥

---

पाठान्तरम् । १. तत्सत्यं. २. काप्यवरैव ३. करुण.

इत्येव दूयते हृदयमपत्रपते च ।

विदूषकः— किं तुए कामपरतंतिदेण पडिस्सवो भंजिदो । अहवा तुमं एव्व अहिंळसंतो वि अत्थिदं महेंदेणेत्ति अण्णकेरं एव्व दमअंतिं ऊसंगे तस्स आरोवेदुं पहवासि । कुदो णु खु णीदिमग्गकुसळो वि कुसंकाहिं अत्ताणं आआसेसि ।

किं त्वया कामपरतन्त्रितेन प्रतिश्रवो भग्नः । अथवा त्वमेवाभिलषन्नपि अर्थितं महेन्द्रेणेति अन्यदीयामेव दमयन्तीं उत्सङ्गे तस्यारोपयितुं प्रभवसि । कुतो नु खलु नीतिमार्गकुशलोऽपि कुशङ्काभिः आत्मानं आयासयसि ।

राजा— ( क्षणं स्थित्वा किञ्चिदाश्वस्य आत्मगतं ) केवलमेवं वा किञ्चिदाश्वसिमः ।

विदूषकः— उट्ठेहि वअस्स उपसप्पामो इंदसमीवम् ।

उत्तिष्ठ वयस्य उपसर्पाव इन्द्रसमीपम् ।

राजा— ( विहस्य ) अनुगुणमेव किलेदमपीयन्तमापूर्य मनोरथमागन्तुं नळस्य स्वयमेव महेन्द्रसान्निधिम् । अलमलं भवतैव निवेद्यताम् ।

विदूषकः— होदु, अहं एव्व गमिस्सम् । कहेहि कहिं इंदो ।

भवतु, अहमेव गमिष्यामि । कथय कुत्रेन्द्रः ।

राजा— सखे नीचैरभिधीयताम् । स किल पौरेभ्यः प्रच्छन्नो विश्वावसुद्वितीयस्समीपमेवास्माकमध्यास्ते । तेन च प्रशान्ते दिवसे प्रवृत्ते च सर्वतस्सन्तमसे निगूढमुपसृत्य प्रत्युक्तिर-

भिधातव्येत्यादिष्टम् । तदास्व कंचित् कालमस्तमुपैतु भगवानब्जबन्धुः ।

विदूषकः— णं अत्थंगदो एव्व रवी । किं इदो वि कालो पडिक्खिदव्वो ।

ननु अस्तङ्गत एव रविः । किमितोऽपि कालः प्रतीक्षितव्यः ।

राजा— ( समन्तादवलोक्य ) कथं प्रशान्तमपि दिवसेन । मया तु मध्याह्न इति गृहीतम् । यतः ।

विरमति सवितुर्जनोपताप-
व्यसनमिदं हि यथा यथा दिनान्ते ।
क्रमनमितशरासनो मनोजः
तपति ममैव तथा तथाङ्गमङ्गम् ॥ १८ ॥

विदूषकः— समओ खु एसो मअणस्स परक्कमिदुम् ।

समयः खल्वेष मदनस्य पराक्रमितुम् ।

राजा— तथैव । अपि च सखे संभावयामि ।

अर्धोन्मुक्तनिचोलमद्य रभसादप्र्यंत रत्या धनुः
संभ्रान्तः किल माधवोऽद्य कलयेदुर्वीमपि ज्यालताम् ।
यावन्तः परितस्समुच्चिनुयुरप्यद्यानुगाः सायकान्
स्यादेवं मकरध्वजस्य मधुरस्सायन्तनः संभ्रमः ॥ १९ ॥

विदूषकः— साहु मअणवुत्तंतमोहुत्तिअ साहु सव्वं ईरिसो मअण-

स्स सण्णाहो । अज्ज किळ ।

संदे चंडकरादवे पुडमदो सञ्झंमि रागे गदे
सण्णद्धे मअरद्धए अ सणिअं ळज्जाणुराआउळा ।
दट्ठूणं कुळपाळिआ पिअदमं दट्ठूण सेज्जाघरं
डिंज्जन्ती विअ चक्खुणा गुरुअणं मुद्धा चिरं पेक्खइ ॥

साधु मदनवृत्तान्तमौहूर्तिक साधु । सत्यमीदृशो मदनस्य सन्नाहः । अद्य किल

शान्ते चण्डकरातपे प्रथमतः सन्ध्यायां रागे गते
सन्नद्धे मकरध्वजे च शनकैः लज्जानुरागाकुला ।
दृष्ट्वा कुलपालिका प्रियतमं दृष्ट्वा शय्यागृहं
विध्यन्तीव ( ? ) चक्षुषा गुरुजनं मुग्धा चिरं पश्यति ॥२०॥

राजा— साधु भोः साधु, चतुरः खल्वसि पश्य सखे सायन्तनमाभिरूप्यमारामस्य । अत्र किल ।

व्यत्यासादधिगत्य कोटरकुटीनीडान्यमी संभ्रमात्
कूजाभिर्व्यतिविद्रते शकुनयः क्रान्ताः शिशूनात्मनः ।

अपि च पुनरत्रैव केलिकासारे ।

गन्तुं निश्चितमात्र एव कमले संमीलिते षट्पदैः
उत्कूजैस्सुकुमारमुत्पलमनुध्यायद्भिरध्यास्यते ॥ २१ ॥

( समन्तादवलोक्य ) चारायण दृश्यतामत्र चक्रवाकयोरत्याहितम् । यतः ।

---

पाठान्तरम् । १. ढंजंती. सज्जन्ती.

अस्तं गच्छतु भानुरस्तु च निशा किं नौ गतं तावता
स्थास्यावः पुनरेवमत्र दृढमित्यर्धं वदन् शङ्कया ।
आश्लेषाय विसारितं गरुतमप्यन्तः शनैः संहरन्
कोकः प्रस्थित एव हन्त रुदतीं त्यक्त्वा रुदन् प्रेयसीम् ॥

सखे सर्वतः प्रवृत्तं च सन्तमसम् । तथा हि ।

पश्यैतत्परिवृत्य पिण्डितमिव स्रोतः स्वतो यामुनं
संप्रत्युल्लसितं तथा दश दिशः संरुन्धदन्धं तमः ।
प्राप्यन्ते परिहृष्यदुत्पलपुटीपर्यङ्कशय्याजुषः
क्रन्दद्भिर्भ्रमरैर्यथा न शिशवः क्रन्दन्त एवान्तिके ॥ २३ ॥

विदूषकः— ता समयो एव्व मे तस्स समीपं गंतुं । ( इत्युत्थाय ) वअस्स कहं अभिहादव्वम् ।

तत्समय एव मे तस्य समीपं गन्तुम् । वयस्य कथमभिधातव्यम् ।

राजा— ( सनिर्वेदम् ) कथमिवाभिधास्यसि । अभिहितं च पुरेदमस्माभिरन्यत्र वयं प्रतिभुवो न पुनरस्यास्संघटनेऽपीति । अधुना तत्तथैव पर्यवसन्नमित्यभिधीयताम् ।

विदूषकः— जं वअस्सो आणवेदि । ( इति निष्क्रान्तः )

यद्वयस्य आज्ञापयति ।

राजा— ( पुरोऽवलोक्य ) कथमभ्युदेतीव पुरस्तादमृतकरः । तथा हि ।

आप्याभिः परितो मृगाङ्कदृषदामाक्रीडवापीजुषां
अम्भस्सान्द्रममुञ्चतीभिरपि यन्नाडीभिरास्विद्यते ।
यद्वल्गन्ति चकोरिकाश्च वदनैरार्द्रीभवत्तालुभिः
तन्मन्ये शशिनः कराः कतिपये प्राचीं परिष्कुर्वते ॥२४॥

( पुनर्निरूप्य )

दिष्ट्यायं पुनरुद्गतो दिनमणिर्दिष्ट्यातिनीता निशे-
त्युत्कण्ठामसृणा दृशो विदधते यावद्रथाङ्गाह्वयाः ।
तावत्पाटलिमानमाभ्युदयिकं मुञ्चन्मुदञ्चत्ययं
तेषामेव मुखैस्समं धवलितं विम्वं दधच्चन्द्रमाः ॥ २५ ॥

किमियतः कालस्य चारायणो महेन्द्रमुपसृत्य निवर्तेत । किं च प्रतिपद्येत चारायणवचनेषु महेन्द्रः । ( पुरोऽवलोक्य ) कथमधुनैव प्रतिनिवृत्तश्चारायणः ।

( प्रविश्य संभ्रान्तो विदूषकः )

विदूषकः— विजई होहि । विजयी भव ।

राजा— सखे किमसि संभ्रान्त इव ।

विदूषकः— ण किं वि । न किमपि ।

राजा— किं दृष्टो महेन्द्रः ।

विदूषकः— दिट्ठो दिट्ठो । दृष्टो दृष्टः ।

राजा— सखे किमाक्षिपसीव किञ्चिदवज्ञया ।

विदूषकः— किं तुए विअ मए वि सो दासीएवुत्तो बहुमन्तव्वो ।

किं त्वयेव मयापि स दास्याःपुत्रो बहुमन्तव्यः ।

राजा— शान्तं पापं शान्तं पापं, अवजानासि न केवलमौदासीन्येन हन्त निन्दस्यपि शुक्तकण्ठम्। किमन्यथा किञ्चिदनेन प्रतिपन्नम् ।

विदूषकः— किं भणसि अण्णहेत्ति ण केवळं पडिवण्णं किं दु एव्वं ति ( इति कर्णे कथयति )

किं भणस्यन्यथेति न केवलं प्रतिपन्नं किंत्वेवमिति ।

राजा— किमित्थमप्यभिहितम् ।

विदूषकः— कहं अस्सिं वि जणे तुह अविस्सासो । अमुं एव्व अत्थं संगहेण ळेहे ळिहिअ तुह समीवे पेसिदुंकामो सो वट्टइ । तदो एव्व जाणीअदु ।

कथमस्मिन्नपि जने तवाविश्वासः । अमुमेवार्थं संग्रहेण लेखे लिखित्वा तव समीपे प्रेषयितुकामः स वर्तते। तत एव ज्ञायताम्।

राजा— असंभावितमेतत्। नाभिधास्यत्येव जात्वेवम् । अभिदधदपि वा किञ्चिदत्र निर्वेदादभिधास्यति न प्रत्यक्षमपि ।

विदूषकः— जइ पच्चक्खं वि अभिहिदं होदि तदो किं तुए पडिवज्जीअदु ।

यदि प्रत्यक्षमप्यभिहितं भवति ततः किं त्वया प्रतिपाद्यताम्।

राजा— अलमसंभावितप्रस्तावनया ।

( प्रविश्य पटाक्षेपेण )

पुरुषः— अयमसौ महेन्द्रस्य लेखः ( इति लेखं निक्षिप्य निष्क्रान्तः )

विदूषकः— दिट्ठं मे वअणम् । दृष्टं मे वचनम् ।

राजा— दृष्ट्वैव विस्मयतेऽयं जनः ।

विदूषकः— वाचीअदु लेहो । वाच्यतां लेखः ।

राजा— ( गृहीत्वा उन्मुच्य मनसा वाचयन्निक्षिप्य साश्चर्यम् ) बहुमतः किञ्चिदाचार इति दुर्जनो बलवदभिमन्यते विश्वमूर्धन्यमात्मानम् । ( पुनस्सकोपम् ) अनात्मज्ञा च विशिष्य जातिरेवेयमध्वरभुजाम् । पश्य ।

भवति जगतामेको याज्यः स्वयं च शतक्रतुः
पतिरिति सुरा वन्दुश्चैनं तदस्तु यथातथा ।
इति यदि किल स्वस्मिन्नित्थं कृतो विनयो मया
प्रभुरिव सखे जाल्मस्तत्किं नु भीषयते च नः ॥ २६ ॥

अपि च कियानयमवलेपवादस्त्वया वयमवज्ञाताः त्वयि यदुचितं तदाचरिष्याम इति ।

विदूषकः— केत्तिअं एदं । ण खु दे एत्थ कोवस्स अवसरो ।
कियदेतत् । न खलु तेऽत्र कोपस्यावसरः ।

राजा—सखे तथैव ।

जाल्मो जल्पतु नाम काममियतामर्षो न हर्षः परं
शान्तिं यास्यति नश्चिरात्परिणता दोर्दण्डकण्डूरिति ।

---

पाठान्तरम् । १ विधुः. २. तदनुरूपमाचरिष्यामः.

अस्मिन्नर्थिनि किन्तु मामुपगते प्रागाश्रुतेऽपि स्वयं
निर्व्यूढोऽस्य मनोरथो न कथमित्यद्यापि लज्जामहे ॥ २७॥

विदूषकः— उट्ठेहि वअस्स इमिणा मग्गेण अंतेउरळीलुज्जाणवासि-
णिं भअवदिं उवसप्पामो ।

उत्तिष्ठ वयस्य अनेन मार्गेणान्तःपुरलीलोद्यानवासिनीं भ-
गवतीमुपसर्पावः ।

राजा— नायं समयो भगवत्युपसर्पणाय । सर्वतो हि मांसलितश्च-
न्द्रिकाभोगः ।

विदूषकः— ( विहस्य ) तदो किं भवे । ततः किं भवेत् ।

राजा— प्रकाशं भवेत् ।

विदूषकः— किं दाणिं गूढो वट्टामित्ति तुह अहिमाणो ।

किमिदानीं गूढो वर्ते इति तवाभिमानः ।

राजा— किमस्ति केनचित् ज्ञातम् ।

विदूषकः— अण्णेण ण केण वि । किंदु तेण एव्व विदब्भराएण ।

अन्येन न केनापि । किंतु तेनैव विदर्भराजेन ।

राजा— ( साश्चर्यम् ) कथ्यतां सखे कथं तेन परिज्ञातम् ।

विदूषकः— अज्ज हि साअंणे तुह सिविणअदंसणप्पहुदि सावि-
त्तीसंवादंतं सव्वं वि वुत्तंतं सरस्सईए मुहादो सुणिअ जइ
णेसहो एव्व परिग्गहिस्सदि तदो सहळो मे संसारोत्ति उ-
वजादकुदूहळो उवक्कंतं वि सअंवरं उवट्ठिदं वि महें-
दं उवक्खिअ पहादे तुह एव्व दातुकामो णिव्वट्टिआणिहिळ-

मंगळकरणिज्जो अज्ज अदीदमेत्ते पुडमजामे सोहणे मु-
हुत्तए तुमं दट्ठुकामो वट्टइ विदब्भराओ । एसो वुत्तंतो म-
हेंदेण संभासिअ णिवट्टमाणेण मए अंतेउरच्चराणं दुवेणं
चेडीणं अण्णोण्णसंळावादो गहिदो ।

अद्य हि सायाह्ने तव स्वप्नदर्शनप्रभृति सावित्रीसंवादान्तं सर्वमपि वृत्तान्तं सरस्वत्या मुखात् श्रुत्वा यदि नैषध एव परिग्रहीष्यति ततः सफलो मे संसार इति उपजातकुतूहल उपक्रान्तमपि स्वयंवरमुपस्थितमपि महेन्द्रमुपेक्ष्य प्रभाते तवैव दातुकामो निर्वर्तितनिखिलमङ्गळकरणीयोऽद्यातीतमात्रे प्रथमयामे शोभने मुहूर्ते त्वां द्रष्टुकामो वर्तते विदर्भराजः । एष वृत्तान्तो महेन्द्रेण संभाष्य निवर्तमानेन मयाऽन्तःपुरचारिण्योर्द्वयोश्चेट्योरन्योन्यसंलापाद्गृहीतः ।

राजा— अपि वयमियन्तं दूरमिदमर्थमेव समागता इति भीमाय भगवत्याभिहितम् ।

विदूषकः— ण खु ण खु मज्झमळोए अपुव्वसण्णिहिदं अत्ताणं दट्ठुकामेण तुए आअदं अणुमदं च पत्थुदप्पसङ्गेणत्ति कहिदम् ।

न खलु न खलु मध्यमलोकेऽपूर्वसन्निहितामात्मानं द्रष्टुकामेन त्वया आगतमनुमतं च प्रस्तुतप्रसङ्गेनेति कथितम् ।

राजा— उच्छ्वसितोऽस्मि । आस्थेयः पुनरपरो महान् यत्नः अति-

नेतव्या द्राघीयसीयं निशेति ।

विदूषकः— किं विअ अक्खिणी णिमीळिअ एक्कवारपस्सपरिवट्टणमत्तेण विरमन्तीए णिसाए अदिवाहणे का चिंता ।

किमिवाक्षिणी निमील्य एकवारपार्श्वपरिवर्तनमात्रेण विरमन्त्या निशाया अतिवाहने का चिन्ता ।

राजा— ( विहस्य ) तव तु तथैव । मम तु

सज्जीभूय सकृत्प्रचाल्य शनकैरुत्क्षिप्य निष्पातिते
भूयः पक्ष्मतलेऽपि पक्ष्माणि भवत्येको निमेषस्सखे ।
काष्ठा ते कति ताः पुनः कति कलाप्येताः कति स्यात्क्षणो
नाड्यस्ते कति हन्त ताः कति निशा केनातिवाह्येत सा ॥

विदूषकः— ( विहस्य ) कहं रअणीए दीहत्तणं उववादिदं । किं णु खु दे पहादं एव्व ण भविस्सदित्ति अहिमाणो ।

कथं रजन्या दीर्घत्वमुपपादितम् । किं नु खलु ते प्रभातमेव न भविष्यतीत्यभिमानः ।

राजा— ( सोत्कण्ठम् )

आलम्ब्य धैर्यमतिवाह्य निशां च दीर्घां
उद्वाहयोग्यमुपलभ्य च तत्प्रभातम् ।
अत्रैव जन्मनि किमङ्ग तयैव साकं
एकं मणीफलकमेव समाश्रयेयम् ॥ २९ ॥

विदूषकः— ण केवळं ताए सह एक्कपीडारोहो अवि तु ताए एव्व ऊसंगे सइदो णाअं समओत्ति चाराअणं वि अण्णदो एव्व

परिअणेण समं ठावइस्ससि ।

न केवलं तया सहैकपीठारोहः अपि तु तस्या उत्संङ्के शायितो नायं समय इति चारायणमप्यन्यत एव परिजनेन समं स्थापयिष्यसि ।

राजा— वयस्य अलं परिहासेन । किमुपगन्तव्या भगवती । अथ प्रतिपालनीयः प्रियसखो विदर्भपतिः ।

विदूषकः— सव्वं भअवदिं एव्व पुच्छिअ आआमिस्सं । तुमं वि परिअणसणाहो भविअ इह एव्व चिट्ठ ।

( इति निष्क्रान्तास्सर्वे )

सर्वं भगवतीमेव पृष्ट्वा आगमिष्यामि । त्वमपि परिजनसनाथो भूत्वा इहैव तिष्ठ ।

॥ इति चतुर्थोऽङ्कः ॥

## ॥ अथ पञ्चमोऽङ्कः ॥

( नेपथ्ये )

दत्तां विदर्भपतिना तुहिनाद्रिणेव
देव्या गिरां पुरत एव जगज्जनन्याः ।
आसाद्य भीमतनयामनघे मुहूर्ते
गौरीं वृषाङ्क इव खेलति नैषधोऽयम् ॥ १ ॥

स चेदानीं सरस्वतीविप्रवासखेदेन दुर्मनायमानां देवीं दमयन्तीं विनोदयितुं सह सखीभ्यामाराममण्डपमवतरति । तदपसरन्तु जनाः

( इति चूलिका )

( ततः प्रविशति सोत्कण्ठो राजा सलज्जा नायिका सख्यौ च )

राजा— प्रिये समाश्वसिहि समाश्वसिहि, दुस्सहानि खलु नाम दुःखान्येव गुरुजनवियोगजातानि किमुत भगवतीविश्लेषपरिणतानि ।

या तिस्रश्शरदो गृहे स्थितवतीत्युच्चैर्यशस्तावतः
कालस्यापि वयं पुनस्सकृदिमामद्राक्ष्म वा नैव वा ।
सा प्रातिष्ठत संप्रतीति किमपि श्रुत्यैव तस्यापि मे
चेतः पश्यत लीयते [1]परितपत्युन्माद्यति भ्राम्यति ॥

---

पाठान्तरम् । १. परिपतत्युत्ताम्यति.

किं पुनरेतस्याः

तस्याश्चाङ्कशतैर्विना सशपथं भुङ्क्ते न या प्रत्यहं
या शेते न तदीयबाहुलतिकाभागेऽप्यकृत्वा शिरः।
तस्या एव च लालनेन जननीवाचं च या व्यस्मरत्
यां च व्यस्मरतां तदङ्कवलभीपर्यङ्किणौ दारकौ ॥ ३ ॥

सख्यौ— सव्वमिदं सच्चं एव्व। एत्तिअं वि वच्चळत्तणं एदेसु अ-
ड्ढि दारएसु भअवदीए।

सर्वमिदं सत्यमेव। एतावदपि वत्सलत्वमेतयोरस्ति दारकयोः भगवत्याः।

दमयन्ती— ( पुनस्सबाष्पं रोदिति )

राजा— ननु मुग्धे निर्गता भगवतीति खिद्यसे न पुनरियन्तं का-
लं आस्थितेत्यानन्दसि।

सख्यौ— हळा दमअंति मा एव्वम्। किं विसुमरिदं पुरा खु तु-
मं पइघरं पवेसिअ पट्ठादुकामं भअवदिं महाराओ एव्व प-
णिवादपुव्वअं इमाणं दीहाउसाणं चूडामङ्गळावहि ठाऊण
अणुगहीदव्वं ति बळादो ठाविदवंतो।

सखि दमयन्ति मैवम्। किं विस्मृतम् पुरा खलु त्वां पतिगृहं प्रवेश्य प्रस्थातुकामां भगवतीं महाराज एव प्रणिपातपूर्वकमनयोर्दीर्घायुषोश्चूडामङ्गळावधि स्थित्वानुग्रहीतव्यमिति बलात् स्थापितवान्।

दमयन्ती— ( कथञ्चिदाश्वस्य ) पढ्ढणिअं वि मे वच्चाणं चूडामङ्गळं

पडिऊळं दाणिं संवुत्तं ।

प्राथनीयमपि मे वत्सयोश्चूडामङ्गलं प्रतिकूलमिदानीं संवृत्तम् ।

राजा— अस्याः किल न कथञ्चिदन्तरेण रसान्तरव्यासङ्गमान्तरः खेदः शक्यो विनेतुं, तद्गच्छत सज्जीकुरुत च प्रतीचीनमुद्यानमण्डपम् ।

सख्यौ— जं आणवेदि महाराओ । यदाज्ञापयति महाराजः ।

( इति निष्क्रान्ते )

राजा— ( नायिकां करे गृहीत्वा अग्रतः प्रदर्शयन् ) पश्य दुर्ललिते त्वामिव दुर्निवारकोपां दयितामनुसरन्तमिमम् । तथा हि

तिष्ठन्नग्रे किसलयपुटं ताम्रमादाय दीर्घं
 कुर्वन्नेतत्तदनु शनकैश्चञ्चुकोटौ प्रियायाः ।
पश्यन्नेतां पुनरचलितां कोकिलस्संभ्रमार्तो
 नोपस्थातुं प्रभवति हठाद्वानुनेतुं च मन्दम् ॥ ४ ॥

दमयन्ती— अहं विअ वराई एसा वि । जं दइदस्स संभमे दिट्ठमत्ते एव्व विळीणहिअआ माणं विमुक्कवदी ।

अहमिव वराक्येषापि । यद्दयितस्य संभ्रमे दृष्टमात्र एव विलीनहृदया मानं विमुक्तवती ।

राजा— निसर्गसरले किञ्चिदिव विज्ञप्तुकामोऽस्मि ।

दमयन्ती— ( सलज्जम् ) किं मुद्धेत्ति परिहसिदव्वं । आणवीअदु

---

पाठान्तरम् । १. कण्ठे. २. संभ्रमान्धो.

जहचिंतिदं अज्जउत्तेण ।

किं मुग्धेति परिहसितव्यम् । आज्ञाप्यतां यथाचिन्तित-मार्यपुत्रेण ।

राजा— ( हस्तेन चिबुकमुन्नमयन् ) अमुना कोकिलव्यापारेण स्मारितमधरामृतं ( इत्यर्धोक्ते )

दमयन्ती— जाणादि अज्जउत्तो चउरतरं मंतेदुम् । ( इति मुखं अपहरति ) जानात्यार्यपुत्रश्चतुरतरं मन्त्रयितुम् ।

राजा— अलं संभ्रमेण ।

यत्पृष्टं कलुषां प्रसाद्य भवतीं व्याजेन यच्चाननं
ब्रीडामन्थरतारकं सुमुखि ते किञ्चिन्मयोदञ्चितम् ।
यच्चाकर्ण्यत कोमलाक्षरपदं मा मेति मुग्धं वचो
धन्योऽसावियताहमस्मि कियता तृप्तोऽस्तु कामी स्वतः ॥

दमयन्ती— उज्जाणमंडवस्स मग्गं उवदिसदु अज्जउत्तो. । उद्यानमण्डपस्य मार्गमुपदिशत्वार्यपुत्रः ।

राजा— इत इत एतु भवती । ( इत्युभौ परिक्रामतः )

राजा— इदं तदुद्यानमण्टपम् । ( इति दमयन्त्या सह प्रविश्य ) प्रिये परिश्रान्तासि । तथा हि ।

पादौ पल्लवविक्रमैरपि तव प्रव्यक्तमालोहितौ
किञ्चित्पीडितमुक्तमुग्धकुसुमावस्थानि गात्राणि च ।

स्वैरं संप्रति कम्पयन्ति च कुचौ श्वासा नियम्योज्झिता
निर्मृष्टं च मुहुर्मुहुर्मुखमिदं घर्माम्बुभिः क्लिद्यते ॥ ६ ॥

तदत्रैव ममोत्सङ्गे क्षणमास्स्व शयिता । ( इति नायिकां तथा करोति )

दमयन्ती— ( आत्मगतम् ) अह्महे कहं अज्जउत्तस्स वंसेण संमूढहिअआ अत्ताणं विसुमरिदंम्हि । ( प्रकाशम् ) अज्जउत्तस्स ऊसङ्गपीडा मा होदु । ( इत्युत्थायान्यत्र शयितु-मिच्छति )

अहो कथमार्यपुत्रस्य स्पर्शेन संमूढहृदया आत्मानं वि-स्मृतवत्यस्मि । आर्यपुत्रस्योत्सङ्गपीडा मा भवतु ।

राजा— ( ससंभ्रमं नायिकां तथा कुर्वन् ) अयि सरले किमि-दमनुचितमाचरितम् । ननु पश्य ।

अङ्गं तावति भावयामि भवती निद्राति मे यावति
क्षोणीं तावति पालयामि विषये यावत्यसि त्वं प्रिये ।
आयुस्तावति रोचये किमपरैस्त्वं यावति प्रेक्षसे
यच्चान्यद्बहुमान्यमस्ति तदपि त्वद्योगयोगेन मे ॥ ७ ॥

तदायासिभिरङ्गैः अनुभूयतां निद्रा ।

दमयन्ती— अज्जउत्तवअणारविन्दसुंदरहरंतहिअआ ण सक्कुणो-मि णिद्दादुं ।

आर्यपुत्रवदनारविन्दसौन्दर्यहृतहृदया न शक्नोमि निद्रातुम् ।

राजा— प्रियंवदे कृतं प्रियालापैः । ( इत्यलकेषु परामृशति )

दमयन्ती— ( निद्रां नाटयति )

राजा— ( चिरं निर्वर्ण्य )

आजिघ्रन्मुखमापिबन्नदपटीमामृ—मुञ्चन् कुचा-
वालिङ्गन्नपि चाङ्गमङ्गमधुना नालक्षये निर्वृतम् ।
एनामेव पुरानुपेत्य सुमुखीमेवंविधान् विभ्रमान्
चेतस्येव समुल्लिखंश्चिरतरं कालं कथं प्राणिषम् ॥ ८ ॥

दमयन्ती— ( चक्षुषी उन्मील्यैव सगद्गदम् ) हा अज्जउत्त परिच्च-चघरपरिच्चददारअं तुह्मकेरचरणमेत्तसरणं एआइणिं मं परि-च्चइअ कहं अरण्णे एव्व पट्ठिदोसि ।

हा आर्यपुत्र परित्यक्तगृहपरिच्छददारकां त्वदीयचरण-मात्रशरणामेकाकिनीं मां परित्यज्य कथमरण्य एव प्रस्थि-तोऽसि ।

राजा— ( सोद्वेगं ) कथमेषा गृहपरिच्छददारकैर्वियोगमरण्यवि-प्रवासमप्यावयोर्दृष्टवती । फलेदपि जात्वेतत् । ( पुनर्विमृ-श्य ) हन्त मया त्यज्यमानमात्मानमेषा दृष्टवती । कथं पु-नरेतद्भवेत् । अहं नाम कदाचिदात्मना दमयन्तीं परित्य-जेयम् । ( विहस्य ) अमुनैव निदर्शनेन दृश्यतामन्यदप्य-संभावितम् । भवतु तथापि विरमत्वेषा दुःस्वप्नात् । ( इस्त-ङ्गुल्या घट्टयति )

दमयन्ती— ( ससंभ्रममुद्बुध्य ) अह्महे इदो एव्व अज्जउत्तो । ( इत्या-लिङ्गय ) अज्जउत्त ण कदा वि मुंचेहि मं । अज्ज खु अदिभी-

सिदंम्हि दुस्सिविणअहदएण । ( इति वक्तुमुपक्रमते )

अहो इत एव आर्यपुत्रः । आर्यपुत्र न कदापि मुञ्च माम् ।
अद्य खल्वतिभीषितास्मि दुःस्वप्नहतकेन ।

राजा— देवि कथनान्नश्यति दुस्स्वप्न इत्यामनन्ति महान्तः ।
अस्वस्थहृदयया दृष्टः स्वप्नोऽप्ययमन्यथा भवेत् ।

दमयन्ती— कहिं सहीओ । कुत्र सख्यौ ।

राजा— एहि सख्यावेव द्रष्टुमन्तःपुरं गच्छावः ।

( इति निष्क्रान्तौ )

॥ इति पञ्चमोऽङ्कः ॥

## ॥ अथ षष्ठोऽङ्कः ॥

( ततः प्रविशति कामन्तकः )

कामन्तकः— ( वामाक्षिस्पन्दं नाटयन् सविषादम् )

प्रत्यूषे महति क्षुतान्यशृणवं पश्चाद्बहिर्निस्सरन्
अद्राक्षं प्रथमं च कुब्जहतकं संप्राप्तमन्तःपुरात् ।
अद्यैतन्नयनं च तावदसकृद्वामं मम स्पन्दते
को विद्यादखिलैरमीभिरधुना किं नाम संपत्स्यते ॥

यदैव खलु विदर्भेषु विदूषकमुखेन श्रावितो वृत्तान्तमिन्द्रो दमयन्त्याः तदाप्रभृत्येव संपादितं बलवता वैरमिति संभ्रान्तहृदयो न स्वच्छमवतिष्ठे । अवेक्षणार्थश्चायमनुक्षणरन्ध्रान्वेषी दायादः पुष्करकः । न चैवं बलवन्तः परिपन्थिन इति शक्यमप्यभिधातुम् । यतः खलु राजानो निसर्गत एव प्रसङ्गादपि परबलप्रशंसासहाः । तथा हि ।

परबलमुपाख्यातुं प्रक्रान्त एव पराक्रमं
स्वमभिदधतं स्वैरं पश्यन्ति तं परिपन्थिनम् ।
कथयति न चेदेतत्प्राप्ते तु कार्यविपर्यये
प्रसभमपरामृष्टो दण्डः पतत्यतिदारुणः ॥ २ ॥

तदिदमनेकप्रकारदुराराधमन्यदीयप्रवृत्तिपरतन्त्रममात्यजीव-



पाठान्तरम् । १. स्वस्थमवतिष्ठे.

नम् । किमाभिधातव्यमस्माभिरप्रियमेव प्रत्यक्षम् अथ नि-गूहितव्यम् । ( क्षणं विमृश्य ) सर्वथा न हि गूहितव्यम् । यदि न ब्रूयां

आसन्नमैक्षत न पुष्करकं सपत्नं
आसीत्ततो नरपतेः करुणा दशेयम् ।
कामन्तकश्च धुरि यः किल वेदितेति
सामन्तमन्त्रिवचनानि कथं सहेय ॥ ३ ॥

अपि चेदानीमावध्यते पुरन्दरपुष्करकयोर्मैत्रीत्यपि विरलम-नुश्रूयते। समागते तु भद्रमुखे शक्यमत्र तत्त्वमवधारयितुम्। ( इति पुरतः पश्यति )

( प्रविश्य )

भद्रमुखः— भगवन्नभिवादये ।

कामन्तकः— राज्ञः प्रियो भूयाः ।

भद्रमुखः— ( उपविशति )

कामन्तकः— सौम्य कीदृशः पुष्करकस्य वृत्तान्तः ।

भद्रमुखः— यादृशः कालोचितः ।

कामन्तकः— ( सविषादम् ) किमस्ति मघवतस्तेन मैत्रीत्यपि किंवदन्ती ।

भद्रमुखः— अस्ति च सत्या च ।



कामन्तकः— ( सनिर्वेदम् )

कोऽयं पुष्करको नृपेष्वपशदः क्वासौ त्रिलोकीश्वरः
साक्षादेव शतक्रतुः क्व च पुनस्तेनास्य नामग्रहः ।

भद्रमुखः— किं नाम नामग्रह इति । पत्रिकासम्बन्धः परमं च सख्यमित्यभिधातव्यम् ।

कामन्तकः— ( विहस्य साश्चर्यं )

तेनास्याथ च पत्रिकाव्यतिकरो मैत्री च नामाद्य चेत्
किं ब्रूमो दुरतिक्रमं भगवतः कालस्य लीलायितम् ॥४॥

भद्रमुखः— विरोधोऽपि गुणवता विदधाति महान्तमुत्कर्षम् ।

कामन्तकः— सत्यमेतत् । तथा हि ।

शौर्यं व्यनक्ति पटुतां विदधाति मन्त्रे
सख्यं महद्भिरपि राजभिरातनोति ।
विस्तारयत्यपि यशो विशदं दिगन्ते
किं नाम नाकलयते गुणवद्विरोधः ॥ ५ ॥

किमुपरि ज्ञायते किंविषयस्तयोः पत्रिकाव्यतिकर इति ।

भद्रमुखः— तत्तु न ज्ञायते ।

कामन्तकः— अपि श्रुतं वा किञ्चिदचिरादेव तैरस्मासु विप्रकर्तुमुपक्रम्यत इति ।

भद्रमुखः— इदं तु किञ्चिदिङ्गितेन मयैव ज्ञायते । भवन्तः किमिति सर्वमाकर्णितवृत्तान्ता इव पुरः कथयन्ति ।

---

पाठान्तरम् । १. कोऽयं.

कामन्तकः—

श्रुत्वा दृढं चारमुखेन किञ्चित्
निर्धार्य किञ्चिन्निजया च बुद्ध्या ।
प्रागेव सन्दिष्टवती ममैवं
प्रातः स्वयं कुब्जमुखेन देवी ॥ ६ ॥

तद्भवानपि गत्वा निवेदयतु वृत्तान्तमिमं देवाय ।

भद्रमुखः— यदाज्ञापयत्यार्यः । ( इति निष्क्रान्तः )

कामन्तकः— इतश्चतुरमुपशोधनीयं नगरम् । ( प्रविश्य पटाक्षेपेण )

राजपुरुषः— महाराजो भवन्तमाज्ञापयति ।

कामन्तकः— ( सविनयम् ) किमिव ।

राजपुरुषः—

वैधेष्वप्यधुना बुधा विशसनाद्यंशेषु संशेरते
स्पृश्यन्ते किमपि द्विजाश्च शनकैः कोपेन लोभेन च ।
लक्ष्यन्ते समुपेक्षिता इव पुनर्वीराश्च वीरश्रिया
जाने किं बहुना जगच्च निखिलं मालिन्यमालम्बते ॥ ७ ॥

तत्किमपचारानिबन्धनो जनपदक्षोभ इति विचार्यतामिति ।

कामन्तकः— ( स्वगतम् ) प्रायेणायमाथर्वणप्रयोग इति मन्ये ।
( पुनर्विमृश्य ) न हि न हि कुत एतत् । तथा हि ।

अप्रामाण्यं श्रुतीनां परिहृतमनुष्ठानमूलं यदीयैः
गेहे गेहे च नित्यं विदधति विहृतिं यत्र वेदास्त्रयोऽपि ।

पादैर्धर्मश्चतुर्भिः प्रचलति नियतं यत्र यस्याभिगोप्ता
राजर्षिर्वीरसेनिः क इव जनपदे तत्र कृत्याप्रवेशः ॥ ८ ॥

तन्मन्ये देवतापचारनिबन्धनोऽयं दोष इति । तदितः किं प्रतिकर्तव्यम् । ( विचिन्त्य ) प्रत्यक्षमुपलभ्यैव किञ्चित्प्रतिकर्तव्यं उदासितव्यं वा । तदेवं तावद्भवतु । ( प्रकाशम् ) मन्दारक समाहूयतां मद्वचनेन बहिरासीनो नगरपालकः सारङ्गकः ।

मन्दारकः— यदाज्ञापयत्यार्यः । ( इति निष्क्रम्य सारङ्गकेण सह प्रविश्य ) एष सारङ्गकः ।

सारङ्गकः— एसो वो सारङ्गअस्स पणामो । ( इति प्रणमति ) एष वः सारङ्गकस्य प्रणामः ।

कामन्तकः — ( राजपुरुषं प्रति ) इतो विचार्यत इति विज्ञाप्यतां देवाय ।

राजपुरुषः— तथा । ( इति निष्क्रान्तः )

सारङ्गकः— आणवेदु अज्जो । आज्ञापयत्वार्यः ।

कामन्तकः— सारङ्गक किमन्यत् चतुरोऽसि राजकार्येषु संमतश्च स्वामिपादानामिति नास्माभिः बहुवक्तव्योऽसि । तथापि किञ्चिदिदमावेद्यते अद्यप्रभृति अस्मदीयासु जनपदनगरग्रामपल्लीषु ।

यददृष्टचरं भूतं यच्च वा किञ्चिदद्भुतम् ।

शङ्कितं वापि यत्किञ्चित् सर्वं तदुपलभ्यताम् ॥ ९ ॥

सारङ्गकः— अणुक्कोसेण सामिपादाणं अणुग्गहेण तुम्हाणं वि अज्ज सव्वं जाणिअ विण्णवेमि ।

अनुक्रोशेन स्वामिपादानां अनुग्रहेण युष्माकमपि अद्य सर्वं ज्ञात्वा विज्ञापयामि ।

( इति ससंभ्रमं निष्क्रान्तः )

---

पाठान्तरम् ।

एतावदेवेदमुपलब्धम् । इति गकोशे ।

एतावत्पर्यन्तमेव प्रणीतमितरबुद्धिशोधनार्थमेव परित्यक्तं महावीरचरितं पूरयता पूरणीयमिदमपि नाटकम् । इति अकोशे रकोशे च ।

अप्पदीक्षितसहोदरविद्वच्छ्रीनृसिंहमखिपौत्रवरेण ।
नीलकण्ठमखिना कृतमेतन्नाटकं नलचरित्रपवित्रम् ॥
व्ययाख्येऽब्दे भानौ गतवति धनुर्जीवादिवसे
तिथौ सप्तम्यां च प्रथितसुयशो ( ? ) यामखिकृतम् ।
युतं पद्यैः श्लाघ्यैर्गुणगणयुतैः सध्वनियुतैः
अलेख्ये तत्सर्वं सरसपदपूज्यं कविहितम् ॥
नीलकण्ठाध्वरिकृतं नलवृत्तसुशोभितम् ।
नाटकं लिखितं रम्यं वीरराघवसूरिणा ॥ इति रकोशे ।

## श्लोकानुक्रमणिका ॥

श्रीबालमनोरमाप्रेस्, मैलापूर्, मद्रास्.